॥ श्रीः ॥

॥ श्रीः ॥

# ॥ अधिकरणार्थश्लोकदीपिका ॥

Adhikarana Shloka Deepika

I.P.

श्रीः

अधिकरणार्थश्लोकदीपिका ॥

प्रारभ्यते ॥

हरिः श्रीगणपतये नमः। अविघ्नमस्तु।

आचार्यगुरवे नमस्क्रिया-

मारभेहमधुना यथामति।

तन्मताधिकरणार्थसंग्रहं

श्लोकदुर्ग्रहतरार्थदीपिकाम् ॥

(1)(श्लो)

मीमांसान्यायजातं गुरुसमयरहस्यार्थ-

मार्गाधिगाह्यां

नाथाख्यां तन्मतज्ञैरपि विततदिशा

दर्शितं संजिघृक्षुः।

शास्त्रोपोद्घातता संगतिजुषिविधिना

संगते चाद्यसूत्रे

निर्णीतं न्यायमादौ परिकरसहितं

संग्रहेणाभिधत्ते ॥

(2)(श्लो)

मन्त्रादिप्रौढकर्मण्युदितगतिरतीतेह

वेदोत्तमत्वा

विध्यर्हस्वाङ्गयोग्यं सविधिरभि-

हितद्वारमाक्षिप्य साङ्गम्।

~~इति। अथातो धर्मजिज्ञासेति। तावताद्यमु-~~

~~परितना~~

सिद्ध्येत्तस्यान्वयभेदप्रियनिजविषयप्रेर-
णार्हतामिसिध्यै
विध्यर्थोऽप्यन्तरङ्गं विषयफलमुपै-
त्यग्रहीस्थं नृजातम् ॥

इति। अथातो धर्मजिज्ञासेति। तावताद्यमुपरितनाधिकरणवदर्थनिर्णाय-कन्यायेनोपस्थापकताविरहाद्शास्त्रान्त-र्भूतमपि सर्वस्वाध्यायतात्पर्यनिर्णयजनन-मुखेन श्रोतृजनजिज्ञासोपस्थापकत्वा-दर्थनिर्णयार्थोत्तरसकलशास्त्रारम्भ-समर्थनपरं, अत एवोपोद्घातसंगतमिद-मधिकरणम्।

इह च स्वाध्यायोऽध्येतव्य इति योयमाचार्यकरणविधिप्रयुक्तिप्रतिल-ब्धानुष्ठानोऽध्ययनविधिस्तस्य विषयः। सविधिस्सामान्यप्राप्त्यधिकारपर्यवसा-
२ यितस्वभावस्सन् किमाचार्यताधिकारप-र्यवसायितया वेदस्यार्थविवक्षायां अवे-गमयन् अर्थज्ञानसहाय्यभूतमर्थविचारा-त्मकशास्त्रं न प्रयोजयति।

किं वाक्यार्थावबोधनिबन्धनाधिकारप-
र्यवसायितया स्वसंगृहीतार्थज्ञानसम्प-
न्नत्वाज्ञया शास्त्रं प्रयोजयतीति सन्देहः।
तत्र लोकप्रसिद्धाध्यापनक्रियाकर्तृत्व-
मात्ररूपस्य दृष्टरूपातिशयरहितस्योपादि-
विलक्षणरूपस्याचार्यत्वस्य प्रापकमीमां-
सकादिवदेव लौकिकत्वात्तत्कल्पकाचार्य-
करणविधेः।
उपनीय तु यः शिष्यं वेदमध्यापयेदिति।
विधिविहितप्रत्ययश्रवणेऽप्यसंभवान्न तत्र-
युक्तिलब्धानुष्ठानत्वमध्ययनविधेः
कल्पयितुं युक्तमिति, न तथाविधस्या-
ध्ययनविधेराद्यसूत्रविचारविषयत्व-
मङ्गीकारार्हमिति परापादितानुपपत्ति-
परिहारार्थं ग्रन्थकृद्भिः विस्तरेणोक्तं
संगृह्णाति मन्त्रादीत्यारभ्य विध्यर्ह
इत्यन्तेन।
स्ववाक्ये चास्मिन् आचार्यत्वरूपोऽर्थ-
इति विशेष्यवाचिपदमध्याहर्तव्यम्।
विशेषणसामर्थ्यादेव विशेष्यस्य गम्य-
मानत्वादनुक्तिः। कर्मशब्दः सामान्यवच-
नोऽपि प्रकरणवशादिहोपनयनाध्यापन-

रूपतद्विशेषविषयतयोपात्तः एकवचनेन
चोपनयनाध्यापनयोरेकप्रयोगत्वमुखेना-
ङ्गाङ्गिभावो दर्शितः।

कर्मकारभेदेन भिन्नानामुपनय-
नाध्यापनक्रियाणां क्रमभावित्वेन सह-
भावमेनसा सेदुषामतिवृत्ततयैवाचार्य-
व्यपदेशहेतुत्वं सप्तम्या दर्शितम्।

मन्त्रादिप्रौढत्वविशेषणेनोपनयना-
ध्यापनक्रियारूपस्य कर्मणोनेकनियम-
योगेन दृष्टातिरिक्तनियमजनितादृष्टातिशयनि-
मित्तत्वमुक्तम्।

मन्त्रादिभिरनेकप्रकारैरुपनयनाध्या-
पनवर्त्तिभिः नियमैः प्रौढं महदुपनयना-
३ ध्यापनरूपं यत्कर्म तस्मिन् कृते उदिता-
उपनीय तु यः शिष्यमिति स्मृत्योक्ता गति-
रुत्पत्तिर्यस्य स तथोक्तः।

कर्मणश्च दृष्टस्वरूपेणाल्पस्य मह-
त्त्वासंभवान्नियमजन्यादृष्टविशेषसमुपबृंहि-
तत्वापेक्षामिति प्रौढत्वं विवक्षितम्। अथवा-
मन्त्रादिभिः प्रौढं कर्म यथोक्तं यस्मिन्नध्या-
पके स तथोक्तः। तस्मिन्नुदिता स्मृतावुक्ता-
गतिर्यस्येति विग्रहः। यद्वा उदिता गतिरा-

चार्यशब्दस्य प्रवृत्ति र्यस्मिन्निति। अतो नि-
यमानपेक्षोपाध्यायादिपदवैलक्षण्येन
स्वरूपादेवदाचार्यपदस्यालौकिकार्थत्वेवधृते
तद्वदेवालौकिकस्याचार्यत्वस्य विधियो-
ग्यफलत्वावगमात् तादर्थ्येन शिष्यमुप-
नीय वेदाध्यापनेनाचार्यत्वं भावयेदित्येवं
रूपाचार्यकरणविधिरित्यर्थः।

इतोऽपि हेतोराचार्यत्वस्यालौकिकत्व-
मत एव तदर्थाचार्यकरणविधिरपि निश्री-
यत इत्याह- अतीतेपीति। उपनयनाध्याप-
नक्रियाकर्तृत्वेऽतीते सत्यपि यदाचार्याय
वरो देय इत्याचार्यसंप्रदानकदानविधिपरं
वा वाक्यान्तेनोक्तम्। कारकत्वरहितसंप्र-
दानावस्था वक्ता मुख्यभूतं स्वरूपं यस्य
स तथोक्तः।

तत्काले तावत् क्रियाकर्तृत्वरूप-
मेव तदिति न संभावयितुं शक्यत स्वदति-
रित्ता इष्टार्थवर्त्यैव तदानीमयमाचार्यशब्द-
स्य वक्ष्याश्रयणीयमेवेत्युपनीयतु यः
शिष्यमिति। स्मृतेश्च व्याख्येयश्रुत्यर्थ-
बाधात्तदपेक्षिताचार्यपदार्थज्ञापनतात्पर्या-
वगमनेन वरदानाद्यनुष्ठानफलकत्वा-

वधारणात्तदनुगुणतयैवाध्यापनक्रियाज-
न्यादृष्टापेक्षयैवाचार्यपदार्थान्वयिकविनि-
५a गमाद्विधिपरत्वमवश्याभ्युपेयमिति
श्रुत्यर्थपर्यालोचनायामाचार्यकरणविधि-
सिद्धिरित्यर्थः।

ननु भवत्वेवमाचार्यकरणविधिः
तथापि कथं तेनाध्यापनविधिप्रयुक्तिरित्यत्राह-
स्वाङ्गयोग्यमित्यादि सिद्धेदिन्तम्।

स आचार्यकरणविधि स्वयं सिध्य-
त्स्वाङ्गयोग्यमभिहितम्। स्वाङ्गद्वारमा-
क्षिप्यैव सिध्येदित्यन्वयः।

स्वस्य विधेरङ्गमुपनयनं उपनी-
यतु यः शिष्यमिति क्ता प्रत्ययसामर्थ्या-
दुपनयनस्याध्यापनाङ्गत्वावगमात्।
तस्य चासत्ति फलत्वादुपनीतस्य कर्मापेक्षा-
यां उपनयनं प्रकृत्य विहितमध्ययनमध्या-
पनोपयोगित्वाद्योग्यद्वारमिति तदाक्षेप-
पूर्विका विधिसिद्धिः तस्य द्वारतया क्षिप्य-
माणस्याध्ययनस्य विहितस्य साङ्गस्यै-
वाक्षेपः विहिताध्ययनशरीरनिवेशित-
त्वादङ्गानां तदनाक्षेपेऽध्ययनस्यैव वा-
क्षेपासिद्धेः आरादुपकारकाङ्गस्य चेहा-

भावादिति साङ्गविहिताध्ययनप्रयुक्तौ वि-
धेरपि प्रयुक्ति र्दुर्निवारेत्यर्थः।

एवमाचार्यकरणविधिप्रयुक्तिलब्धा-
नुष्ठानतामध्ययनविधेः प्रदर्श्य तस्या-
धिकारपर्यवसानापेक्षायां प्राथम्यादाचार्य-
काधिकारपरत्वमेवेति पूर्वपक्षनिरासेनांत-
रङ्गत्वादर्थज्ञान निबन्धनाधिकारपरत्व-
मेवेति राद्धान्तमाह-

तत्स्थो नृभेदेत्यादिना। तच्छब्देना-
चार्यकविध्याक्षिप्तस्याध्ययनस्य परामर्शः।
तस्मिन् अध्ययने विषये स्थितो यः
स्वाध्यायोध्येतव्य इति विधिवाक्यस्यार्थो
नियोगलक्षणः। सः नृभेदस्य पुरुषवि-
शेषस्य प्रिये स्वसमीहिते साधनतया स्व-
5 शेषभूते विषये प्रेरणं प्रवर्तनं प्रत्यर्हस्य
योग्यस्यात्मनः स्वरूपस्यैव विध्यर्थ-
विषयफलमध्ययनजन्यार्थज्ञानं फलमे-
व उपैति प्राप्नोति स्वीकरोति तस्य अ-
ध्येतृवर्तिफलत्वेनान्तरंगत्वान्न पुनः
जातमग्रधीस्थम्।

पूर्वसिद्धतया प्रथमप्रतीतमाचार्य-
त्वफलमुपैति तस्य पुरुषान्तरवर्तित्वेन

बहिरङ्गत्वात्तदाहुः।

मुख्यादपि बलीयस्त्वमन्तरङ्गत्वमुच्यते।

तस्मादध्ययने ध्येता स्वामी नाध्यापको नरः॥

इति। तदेवं मुख्यजघन्यन्यायानादरेण नान्तरङ्गबहिरङ्गन्यायोपादाने अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय इति न्यायेन, बहिरङ्गाचार्यकफलपरिहारेणान्तरङ्गार्थज्ञानफलस्य विधिस्वीकारे स्थिते सत्यर्थज्ञानस्य मीमांसाधीनत्वान्मीमांसाशास्त्रमारभ्यमिति सूत्रेण समर्थितमित्यर्थः।

---

चोदनालक्षणोऽर्थो धर्मः इति [१.१.२] वेदार्थस्वरूपप्रमाणप्रतिज्ञापरं द्वितीयं सूत्रम्। तत्प्रतिपाद्यमर्थजातं संजिघृक्षुः प्रथमं स्वरूपप्रतिज्ञोपपादककार्यव्युत्पत्त्यर्थान् संस्पर्शित्वसाधकं वादस्थानद्वयमेकेन श्लोकेन संगृह्णाति। इष्टोपायं कृतिविज्ञमनुसृत्य लोकप्रवृत्ताउद्देश्यत्वान्नियतमनतिव्यापि हेतुस्तदेव। व्युत्पत्तिश्च व्यवहृतिविज्ञादर्थभेदे नृवाक्यं लिङ्गं योग्यस्वविजयमिते वेदमेयन्तु। कार्यमिति ॥२॥ विचार्य तयोपाक्षिप्तो वेदार्थो विषयस्स किं कार्यरूप उत सिद्धरूपो-

पीति संशयः।

तत्र इष्टसाधनस्यैव प्रवर्तकत्वात्
तस्यैव चोदनार्थत्वं न कार्यस्येति वेदा-
८ र्थस्य कार्यरूपत्वप्रतिज्ञा न संभवति।
नन्विष्टोपायतायां प्रवृत्त्यव्यभिचारेऽपि सा-
क्षाद्धेतुत्वेतीतादावपि तदापत्तेः।
कार्यव्यवधानेन हेतुत्वे कार्यस्यैव सा-
क्षात्प्रवर्तकत्वसिद्धिरिति वाच्यम्।

तस्याः कार्याधिजननेतीतादिप्रसक्ति-
परिहारहेतोः प्रवृत्तिजनने तत्परिहारहेतु-
तयोपगमात् तत्रातीतादिव्यावर्तकस्य कृतिसा-
ध्यत्वमेव इति। कृति साध्यैकार्यसत्वमपा-
यिनीष्टोपायतैव प्रवृत्तिहेतुरिति शंकां
परिहरन्नाह- इष्टोपायमिति।

कृतिवशम् कृत्या साध्यमिति यावत्।
तादृशमिष्टोपायमिष्टसाधनमनुस्मृत्या
या लोकस्य प्रवृत्तिस्तत्र कृत्युद्देश्यत्व-
न्नियतमेव। तदाहुः-

इष्टकोटाविष्टोपाये हि कृतियोग-
स्तदुद्देश्यतयैव धीस्थः नान्यथेति तदेव
कृत्युद्देश्यत्वमेव कार्यशरीरबहिर्भूतविशे-
षणान्तरानपेक्षा प्रवृत्तौ हेतुः। यस्मात्तद-

नातिव्याप्तिरपि अतीतादीन् व्याप्नोतीति अति-
व्यापिनः तस्मात्तत्कृत्युद्देश्यत्वमेव प्र-
वृत्तिहेतुरभ्युपेयते, न तु कृतिसाध्यत्व-
सहिते प्रोपायता विशेषणापेक्षत्वे गौरवा-
दित्यर्थः।

ननु नाम कार्यस्य प्रवर्तकत्वं त-
थापि तदेकनियतं वेदस्य प्रामाण्यं सिद्धेऽपि
व्युत्पत्तिसंभवेन कार्यार्थत्वावधारणस्या-
ज्ञान्यत्व वचनत्वादित्याशंक्य कार्य एव
पदानां व्युत्पत्तिर्न सिद्धरूपेपीति प्रदर्श-
यति व्युत्पत्तिश्चेति।

गामानयेत्यादि वाक्यस्य श्रवणानं-
तरभाविनीं प्रयोज्यस्य प्रवृत्तिं पश्यन्
पार्श्वस्थो व्युत्पित्सुः प्रवृत्तिहेतोः कार्यज्ञा-
नस्य शब्दजन्यत्वमन्वयव्यतिरेकाभ्यां
अवधारयन्नावापोद्धाराभ्यां कार्यपद-
७ स्य साक्षात्कार्याभिधायकत्वमितरेषां
तल्लक्षितस्वार्थाभिधायकत्वं सर्वपदानां
कार्यार्थत्वमवधारयति।

न च पुत्रस्ते जात इत्यादि वाक्यश्रवण-
मुखविकासादिलिंगेन हर्षानुमानद्वारा प्रिया-
र्थप्रतीतिं तद्धेतुत्वं च वाक्यस्यावधारणं

न कार्यभूते सिद्धरूपेऽर्थेऽपि व्युत्पद्यत
इति वाच्यम्।

प्रियार्थविशेषप्रतीतिहेतुत्वभावेन परि-
शेषयावधारणासंभवात्। व्यवहारस्तु
विशिष्टार्थनिष्ठ एवेति न तत्र पारिशेष्या-
नवधारणप्रसक्तिरित्याहार्थभेद इति।
अर्थभेदः — अर्थविशेषः।

गवानयनादिलक्षणो विशिष्टरूपोऽर्थः
तद्विषयाया व्यवहृति व्यवहारः प्रयोज्य-
स्य प्रवृत्तिः तत्सामर्थ्यादेव व्युत्पत्तिरपी-
त्यर्थः। एवं च कार्य एव व्युत्पत्तेः कार्य-
रूपो वेदार्थ इति कार्यैकनियतं प्रामा-
ण्यं चोदनासूत्रोक्तं संभवत्येवेत्यर्थः।

---

नन्वस्तु कार्यबोधात् प्रवृत्तिस्त-
त्रैव च व्युत्पत्तिस्तथापि कार्यरूपत्वप्रतिज्ञा-
नोपपद्यते। पुंवाक्यवत्त्वे व्यभिचारद-
र्शनमूलार्थसंस्पर्शित्वशंका वा वाक्यत्व-
सामान्येन वेदावगाहित्वेन तस्यार्थनिश्चा-
यकत्वाभावादित्याक्षिपति। नन्वतथाभूत-
मप्यर्थं ब्रूयादिति। तत्संक्षिपति न वाक्यमि-
त्यादि। न वाक्यं योग्यत्वविषयभूते लिंग-

मित्यन्वयः।

गृहीतसंगतिकमपि पुंवाक्यं नश्रवणस-
मनन्तरमर्थधीकरं असदर्थविषयत्वेनापि
प्रयोगदर्शनादनन्तरं तच्छंकायां प्रतिबद्ध-
8 शक्तिकत्वेन तन्निवृत्ति सापेक्षकत्वात् प्रति-
बन्धनिवृत्तिश्च शक्तिप्रायोगिकत्वेनाभि-
धानाय स्वविषयस्वशब्देनात नृवाक्यमु-
क्तम्। ततश्च वाक्ययोग्यार्थे या वस्तुःप्रमितिः
तदनुमानेनैव भवेत्। तदनुमाने च लिंगं
तद्वाक्यमेवेत्यलिंगे लिङ्गाभिमानाद्व्यभि-
चारानुमान एव इति लिङ्गस्यैव व्यभिचारः
न वाक्यस्येत्यर्थः।

नन्वेवं वाक्यस्यानुवादकत्वमेव
स्यान्नत्वभिधानमिति लोकेऽभिधानशक्ति-
ग्रहणाभावाद्वेदार्थधीर्न स्यात्।

न च लोकवक्तृज्ञानानुमानप्रमितविषय-
तया लौकिकवाक्यमनुवादकं तथापि सश-
क्तिकमेव। अन्यथानुवादकत्वासंभवादि-
त्यपौरुषेये वेदे सदर्थविषयप्रयोगदर्शनमू-
लार्थसंस्पर्शित्वशंकारूपशक्तिप्रतिबन्ध-
कविरहे शक्तेरविकलत्वात्तत्प्रातियोगिकं का-
र्यमेव वेदेनाभिधेयमित्यर्थः।

 R.2101.

एवं स्वरूपप्रतिज्ञोपपादकवन्दद्वया-
नन्तरं श्येनाद्यपूर्वस्यापि स्वतः पुरुषार्थ-
त्वेऽपि निषिद्धफलतया विपरीतरूपत्वेन
केवलपुरुषार्थवाचकधर्मपदोत्पन्नत्वेना-
र्थपदव्यावर्त्यत्वं प्रदर्श्यते उभयमित्यादि।
तत्संक्षिपति।

प्रयोजनत्वेन विधिश्रुतोऽपि
श्येने तयोर्मान्य विरोधमनर्थः।
यागे निषिद्धफलप्रयोज्ये
न तत्प्रयुक्तिं विधिना फलान्ता॥

श्येनाद्यपूर्वस्यार्थपदव्यावर्त्यत्वं संभवति
नवेति सन्देहः।

श्येनादेरपि कृत्युद्देश्यतया सुखादि-
तुल्यत्वेन प्रयोजनतया लिङादिनाभिहि-
तस्य पुरुषार्थत्वाविशेषान्नार्थपदव्याव-
१ र्त्यतेति पूर्वपक्षमनुवादमुखेन प्रदर्शयन्
उपक्रमते। प्रयोजनत्वेनेति। अविरोधे श्ये-
नेनाभिचरन् यजेतेति विहित श्येन यागेन
नियोगलक्षणो विधिः। प्रयोजनत्वेन कृत्यु-
द्देश्यतया पुरुषार्थत्वेन श्रूयते। तथाप्यपू-
र्वार्थत्वात् सविधिरनर्थक इत्यर्थः।

ननु पुरुषार्थस्यैव सतः कथमपुरु-

षार्थत्वमित्याशंक्य परोपाधिकमपुरुषार्थ-
त्वन्न स्वत इत्याह-तथोक्तेति।

तथा शब्देन प्रयोजनत्वेन विहितो
अन्यो न हिंस्यात् सर्वभूतानीति निषेध-
विधिस्तेन विरोधो यस्य स तथा। यद्वा
तथोक्तोऽन्यो निषेधविधि र्विरोधी यस्य
विरोधज्ञानयोः एकहिंसा विषयत्वेन हिं-
स्यादिति विरुद्धोभयविधिनिषेधपरत्वात्
न हिंस्यादिति निषिद्धा हिंसा श्येनेनाभि-
चरन्यजेतेति, हेत्वर्थविहित शतृप्रत्ययेन
फलतया श्रूयते इति निषिद्धफलत्वादर्थ-
श्येनादिविधिरर्थपदव्यावर्त्यहि इत्यर्थः।

ननु श्येनगतहिंसाया वैधत्वान्न पुरु-
षार्थविहितनिषेधविधिविरोधिता, अग्नीषो-
म हिंसावत् यथा स्वकरणप्रधानोपकारका-
ङ्गे वैधीप्रवृत्तिस्तथा प्रधाने विफलतः
एव तत्र प्रवृत्तेः यदेव विधिकरणं तदेव
फलकरणमिति फलेपि वैधी प्रवृत्तिरिति
न निषिद्धफलत्वादधर्मत्वं श्येनादेरिति
नार्थपदव्यावर्त्यतापीति शंकां परिहरति।

याग इत्यापि न हिंस्यादिति निषिद्ध-
शत्रुनाशस्य पुरुषार्थतयाऽभीष्टेन हिंसा-

लक्षणेन फलेन प्रयोज्ये प्रवर्त्ये यागे सतीति समासः। काम्येषु कामिनं नियोज्यं प्रति काम्यमानोपायस्यैव कार्यतया बाधाद्बलाद्विधिविषयत्वार्थं यागस्य प्रथमं फलं प्रति करणत्वेनान्वयः। विधिं प्रति विषयत्वेनान्वयात् पश्चाद्विधिं प्रति करणत्वेनान्वयः ततोपि विधितः प्रवृत्त्याक्षेपः।

एवं विध्याक्षेपात् पूर्वं फलकरणत्वान्वयानन्तं लोकवत्फलरागादेव तत्करणेपि प्रवृत्तेः फलप्रयोज्ये प्रधाने यागे सति विधिना फलान्ता तत्प्रयुक्तिर्नास्ति तदंश एव विधिप्रयुक्तिरिति प्रधानव्यतिरिक्तकरणोजनकाङ्गेष्वेव विधिप्रयुक्तिः न प्रधानेपि। अन्यतः प्राप्तत्वात्तत्प्रवृत्तेः॥ न च प्रधानोपकारकेष्वपि फलप्रयोज्यत्वमेवेति वाच्यम्।

अपूर्वस्य हीति कर्तव्याकांक्षा न प्रधानस्येति तेषु विधिप्रयुक्तिरेव शीघ्रा। एवं श्येनापूर्वस्य निषिद्धफलसंबन्धादधर्मतयाप्यपिद्रव्यावर्त्यत्वमुचितमेवेत्यर्थः।

---

कार्यरूपो वेदार्थस्तत्र चोदना प्रमाण-

मिति ऋत्वर्थाश्रियां प्रतिज्ञातं तत्र किं श्रौत-
प्रतिज्ञातं वेदार्थस्वरूपं भेदाभेदेन वक्तव्यम् ।
उत श्रौतप्रतिज्ञायां हेतुरिति संशयनिवृत्त्यर्थं
तस्य निमित्तपरीक्षेरित्यध्याय प्रतिज्ञापरं
सूत्रं प्रमेयप्रतिज्ञापूर्वं परीक्षणीयाहुतिसिद्धेः
श्रौतत्वात् प्रधानभूतत्वात् आर्थी त्वार्थसि-
द्धत्वादप्रधान इति श्रौतप्रतिज्ञाविषयभूतस्व-
रूपभेदाभेदेन पूर्वं विचार्यं न त्वार्थप्रतिज्ञा-
मेयं प्रामाण्यमिति पूर्वपक्षपरिहारमाह-
श्रौतप्रतिज्ञार्थविशेषसिद्धिर्वेदानपेक्षत्वधि-
येति तत्प्राक् श्रौती श्रुतिसिद्धा कार्यरूपो
वेदार्थ इति प्रतिज्ञातस्य विशेषो भेदाभेद-
रूपः तस्य सिद्धिरिदमित्थमिति निश्चिता
प्रतिपत्तिः सा सामान्येन वेदस्यार्थप्रतिपादने
मानान्तरसापेक्षत्वं नास्तीति धियैव स्यात् ।
अनपेक्षत्वलक्षणप्रामाण्यविशिष्टवेदप्रतिप-
न्नत्वेनैव तदर्थस्य विचार्यता नान्यथा ।
नह्यस्ति संभवः वेदो प्रमाणभूतस्तदर्थ-
श्च विचार्य इति ।

एवं प्रथमं प्रामाण्यसमर्थनपूर्वकं वेदार्थ-
स्थिरीकृत्य पश्चात्तद्विशेषजिज्ञासा कार्येत्यर्थः ।
एवञ्च प्रथमं प्रामाण्यसमर्थनमित्याहत इति-

हेतौ तदित्यनपेक्षत्वमुक्तम्। नन्वेवं प्रामा-
ण्यसमर्थनस्य प्राधान्यम्। तथापि प्रतिज्ञा-
नन्तरं प्राप्तिहेतुकथनातिरिक्तपरीक्षाकथ-
नस्य संगतिर्नास्तीति शिष्यशिक्षार्थमपि
निमित्तवदन्तमेव वाच्यम्। एवञ्चानपेक्ष-
त्वादिति हेतुरेव वक्तव्यम्। तत्परीक्षार्थकथ-
नमनुचितमित्याह- परीक्ष्य बौद्धाः स्वयमे-
व शिष्यो यथेति तस्योक्तिरियं हि शिक्षा।
यथा हेतुं स्वयमेव परीक्ष्य शिष्यो बुध्येदि-
त्यतो हेतोः तस्य परीक्षणस्योक्तिरित्यन्वयः।

येन प्रकारेण शिष्यः उपपन्नतयास्य
संविदनुसरणप्रकारेणानुशासनयोग्यः
स्वयमेव गुरूपदिष्टहेतुविशेषेण परीक्ष्य
असिद्धत्वादिव्यतिरेकेण विचार्य विबुध्येत।
इत्येवं रूपप्रयोजनसिद्धये तस्योक्तिः।

तच्छेदेन परीक्षणस्य परामर्शः।
यद्यत्र निमित्युच्येत तदा निमित्तमात्रप्राप्तिरेव
स्यात्। न तु परिशुद्धनिमित्तसिद्धिः।
परीक्ष्यपदप्रक्षेपे तु परीक्षितत्वेन परिशुद्ध-
निमित्तसिद्धिरित्यधिकस्य परीक्ष्यपदस्यो-
क्तिर्न दोषायेत्यर्थः।

नन्वेवं न्यायबिन्दुप्रसिद्धं प्रतिज्ञानन्तरं

हेतुकथनमिह तदकथनाद्दोषो परिहार्य इ-
त्याह- इयं शिक्षा हीति।

12 प्रकृता मीमांसा परामृष्टा हि: हेतौ प्र-
सिद्धौ वा यस्मादियं शिष्यशिक्षारूपिणी
न तर्कशास्त्रवज्जयपराजयफला। अतोनं-
तरं हेतोरकथनं शिक्षितकर्तकवादग्रन्थ -
एव प्रतिज्ञानन्तरं हेतुकथननियमः।

ननु शिक्षारूपे शिक्षारूपत्वं चास्य
प्रथमसूत्रे न्यायाभासेन वेदस्यार्थपरत्व-
धिया तदर्थविचारान्निवर्तमानमध्येतारं
प्रत्यर्थपरत्वं सूचनमुखेन सूत्रप्रणयना-
च्छिष्याज्ञाननिरासेन शिक्षारूपत्वं प्रसि-
द्धम्। इति प्रस्तुतस्य वेदार्थस्य यन्निमि-
त्तं प्रमाणं तस्य परीक्षाकथनमुचितमेवे-
त्यर्थः। यद्वा इयमिति परीक्षणोक्तिरन-
द्यिष्टा।

निमित्तपरीक्षाकर्तव्येत्युक्तं सत्संप्रयोगे
सूत्रेण प्रत्यक्षा अनिमित्ततोच्यते।

एतत्संक्षिपति प्रत्यक्षमक्षममसन्तमिमं
प्रमातुं साक्षान्मितिरस्तरचितेन्द्रियसन्निकृष्टे
मेये ह्युपाधिमविमृश्य परं स्वरूपमात्रानु-

श्रुतिरनुमादि च हेतुहानात् । इति वेदार्थबो-
धने प्रत्यक्षादि समर्थमुत न इति संशयः । प्रमा-
णत्वाविशेषात् समर्थमिति प्राप्ते उच्यते ।
प्रत्यक्षमिमं वेदार्थं प्रत्याययितुं अक्षममस-
मर्थमित्यर्थः । कुत इत्याह सतामिति ना-
सच्छब्देन वेदार्थस्य नासत्त्वमुक्तम् ।

किन्तु भविष्यद्रूपत्वम् । भाष्ये चैतदु-
13 क्तं भविष्यच्छब्दोऽर्थः न ज्ञानकाले समस्तीति ।
एवं च मितिकाले भविष्यद्रूपं वेदार्थं प्रत्या-
ययितुं प्रत्यक्षमसमर्थमित्यर्थः ।

नन्वेतावता कथमक्षमत्वमित्याशंकां
शमयति साक्षादित्यादि संनिकृष्ट इत्यन्तेन ।
तच्छब्देन प्रत्यक्षं परामृष्टम् । प्रत्यक्षं
साक्षान्मितिरित्यन्वयः ।

तदुक्तं साक्षात्प्रतीतिः प्रत्यक्षमितिः
साक्षात्त्वं लक्षणम् । न चैतदव्यापकं मेयमा-
त्रप्रमास्वपि साक्षात्त्वस्य विद्यमानत्वात् ।
न च भावनाप्रकर्षपर्यन्तं तज्ज्ञे ज्ञाने व्य-
भिचारः । तस्य स्मृतिरूपत्वात्तस्य मिति-
शब्देन स्मृतिव्यावर्तिका स्मृतेर्यदिततया-
वेदनस्वभावेनमितित्वात् । साक्षादित्यनु-
मानादिव्यावृत्तिः । एवं सामान्येन प्रत्यक्ष-

लक्षणमुक्त्वा मेयप्रत्यक्षमाह- उचितेति। उचितं योग्यं यदिन्द्रियं तेन सन्निकृष्टे संबन्धेऽर्थे साक्षान्मितिः। प्रत्यक्षं त्रिविधं सन्निकर्षः संयोगः संयुक्तसमवायः समवायः इति। एवमिन्द्रियसंप्रयुक्तार्थग्राहि प्रत्यक्षं वर्तमानार्थग्राहि प्रमितिकाले वर्तमानार्थं प्रत्याययितुं असमर्थमेवेत्यर्थः।

ननु दुर्निरूपं साक्षात्त्वमित्याशङ्क्य तल्लक्षणमार्थीत्याह मेय अनुभूतिरिति। द्रव्यगुणजातिरूपे मेयेऽर्थे लिङ्गसदृशाद्युपपन्नत्वादिकं स्वरूपव्यवधायकमुपाधिमनवमृश्यैव केवलं स्वरूपमात्रेण यानुभूतिस्सा साक्षान्मितिः स्मृतिव्यतिरिक्तसर्वज्ञानेष्वनुभूतित्वमस्ति यत्र स्वरूपेण स्वेन रूपेण लिंगादिव्यवधाननिरपेक्षमनुभूतित्वं यत्तत्साक्षात्त्वम्। तदुक्तं —

साक्षाद्धि स्वरूपधीः इति।

१५ द्वेधा च लोके वस्तूनां प्रतीतिः। स्वरूपसंबन्धितया पररूपसंबन्धितया च। तत्र स्वरूपमात्रानुबन्धितया प्रतीतिः साक्षात्त्वमित्यर्थः।

सामग्रीं प्रदर्शयति। मेये ह्युपाधिमावि-

R. No २९०१।

मृष्य परमिति रूपाद्यवमर्शो ऽव्यवधानेन प्रतीतेरनुमानाद्युत्पत्तिः। तदनवमर्शो परमुपाधिकृतव्यवधानबध्यत्वात्। स्वरूपेण प्रतीते स्साक्षात्त्वेन प्रतीतिसाक्षात्त्वस्य सुनिरूपत्वात्तल्लक्षितं प्रत्यक्षं वेदार्थं प्रत्याययितुमित्यर्थः।

अत्र परशब्देनोपाध्यवमर्शरूपानुमादिसामग्रीव्यापत्तिः कृता। मात्रशब्देन अनुमादिव्यापत्तिरिति न तयोर्व्यर्थता। अत्र केचिद्वदन्ति। स्वरूपमात्रेत्यत्र स्वरूपमात्रेति परिच्छेदः। मेय इत्यादि स्वरूपमित्यन्तेन ग्रन्थेन प्रत्यक्षलक्षणं अनुभूतिरिति प्रमाणलक्षणं च क्रियत इति।

एतच्चाभियुक्तानां नातीव हृदयं गमयितुमुपेक्ष्यम्। किञ्च- विशेषलक्षणाभिधाने सामान्यलक्षणमर्थसिद्धत्वान्न पृथग्वाच्यम्। नन्वस्तु वर्तमानविषयत्वेन प्रत्यक्षमक्षयम्। अनुमानादि त्ववर्तमानविषयं क्षममेव। अनुमानविशेषस्तावत् अवर्तमानविषयोऽप्यस्ति। यथा जलधरसमुन्नतिदर्शनेन वर्षानुमानमित्यनुमानं वेदार्थे निमित्तं तर्हि मित्यत्राहानुमानादिष्वेति।

चस्समुच्चये। आदिशब्देनोपमार्थाप-
त्त्योः संग्रहः अनुमाद्यप्रत्यक्षमित्यन्वयः।
हेतुह्यानादिति हेतुः हेत्वभावादित्यर्थः।
हेतुशब्देनानुमानोपमानार्थापत्तौ यत्कारणं
तदुपादानं कृतं नत्वनुमानगतहेतुमात्रस्य।
15 इतिलिङ्गसदृशानुपान्नुमानादिकारणानां
वेदार्थे भावादनुमाद्यप्रत्यक्षं शब्दस्यैव
वेदार्थं प्रति हेतुता। न च तस्य लिङ्गभावेन
बोधकता किन्तु वाचकतयैवेति वेदार्थं प्रति
मानान्तराणामनिमित्तत्वमेवेत्यर्थः।

---

प्रत्यक्षादीनामनिमित्तत्वमुक्तं, इदानीं
शब्दस्य निमित्ततोच्यते। औत्पत्तिकसूत्रेण-
तदाक्षिपति। शब्दस्तु न प्रमितता। न हि प्र-
शास्त्युपाधिः कार्यार्थतेव निदितापि न तद्ग्रहे
सा। स्वाधीनवाच्यस्यने व्यभिचारशंका
तन्मूलमानघटितार्थधिया त्वपैति। इति।
चोदनाप्रमाणमुत न इति विचार्यते।

यदि प्रत्यक्षाद्यविषयो वेदार्थः। तर्हि
चोदनापि न तत्र प्रमाणम्।

लोके हि मानांतरवेद्यतापगीते स्वार्थे
शब्दानां शक्तिर्गृहीता यथा कार्यान्विते इति

तद्बोधतोपहितमर्थं शब्दो बोधयितुमलं न तदनुपहितमपि शब्दात्मिका च चोदनेति अपि न तदवेद्ये वेदार्थे मानतामर्हतीत्यमान एव वेदार्थस्येति प्राप्ते । उच्यते-

शब्दस्तु नेति तु व्यतिरेके शब्दास्त्विमं वेदार्थं प्रमातुं प्रत्यक्षवन्नक्षमः, किन्तु क्षम एवेत्यर्थः ।

ननु मानान्तरवेद्यतारूप ज्ञप्त्युपाधि-विरहान्नक्षम इत्यत आह- प्रमितता न हि ज्ञप्त्यु-पाधिरिति । न हि हेतौ यस्माल्लोकेपि माना-न्तरवेद्यविषयत्वं ज्ञप्त्युपाधिर्न भवति । किन्तु कार्यत्वमेव । अतस्तदविषयार्थ-
16. बोधकत्वं वेदे स्यादित्यर्थः ।

ननु व्युत्पत्तिसमयदृष्टकार्यता प्रमिततयोः कार्यता एवोपाधिता प्रमितताया नेत्यत्राह- कार्यार्थितेत्यादि । सत्यन्तं सत्यं यथा सत्या कार्यार्थिता तथा मानान्तरवे-द्यता व्यवहर्तृ पुरुषेण विदिता: । तथापि व्युत्पद्यमानपुरुषेण तद्दृष्टे शक्तिग्रहणस-मये सा वेद्यता न ज्ञप्त्युपाधितया गृहीता स्वात्मनि प्रवृत्तिहेतुत्वादर्शनादेव बालेन । प्रवृत्तिहेतुतया स्वात्मनि दृष्टं तदेव परात्मि-

ऽपि तद्धेतुतया कल्प्यम्। आत्मनि तु कार्यस्यैव तद्धेतुत्वं दृष्टमिति परस्मिन्नपि तेन कस्यैव हेतुत्वं कल्प्यते।

शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनाच्छब्दस्य प्रवृत्तिं हेतुत्वमपि कार्यबोधकतयेति कल्प्यत इति।

कार्यतैव बालेन शक्त्युपाधितया गृहीता नवेद्यतापि स्वास्मिन्नदृष्टत्वादित्यर्थः। नन्वेवमपि लोकेऽभिधानवृत्तेः मानान्तरसिद्धे विषयत्वनियमान्मानान्तरानर्हे वेदेऽभिधानानुवृत्तेरभाव एव वेदार्थस्येत्यत आह स्वाधीनेति।

स्वाधीनं पुरुषाभिप्रायाधीनं रचनं यस्य यत्र लोकेऽभिधायवैपरीत्यज्ञानेन व्यभिचारशंका भवति। साशंका वाक्यरचनानुकूलभूतमानान्तरेण घटितार्थं संगतार्थं इदं वाक्यमिति धियैवापैति। न तु वाक्यप्रयोगमात्रात्। वाक्यप्रयोगमूलभूतमानान्तरेण ~~अर्थमवबुध्य संघटितार्थमिदं वाक्यमिति~~ अर्थमवबुध्य संघटितार्थमिदं वाक्यमिति धियैव व्यभिचारशंकानिवृत्तिरिति शंकानिवृत्त्यर्थमेवाभिधान-

R. No 2901.

वृत्ते मानांतरसिद्धविषयत्वमिति वेदेऽभि-
धानानुवृत्तिर्भवेदिति चोदना वेदार्थे
प्रमाणमित्यर्थः।

17.

इदानीं तस्य निमित्तपरीष्टिरित्यादि
सूत्रत्रयं वृत्तिकारमतोपन्यासमुखेन वि-
धानान्तरेण व्याख्यातुं वृत्तिकारस्त्व-
न्यथेमं ग्रन्थं वर्णयाञ्चकार।

तस्य निमित्तपरीष्टिरित्येवमादौ तत्र
संक्षिपति। येनाबाध्यबोधः स्फुरति,
सविषयो धाऽऽरायां सहैव ज्ञेयं रूपस्व-
भावानदविरतधियाऽप्यन्यरूपाग्रहाच्च।
तादृग्धीस्यान्यपूर्वं भ्रमगतिरिति तद्ग्रह-
मेयाविकल्पास्तद्धीहानान्न सत्वं प्रमिति
विधुता हेकधीः शब्दहेतुः।

तत्र प्रयोगजत्वं संभविनवेति संशयः।
शुक्तिकारजतज्ञानदृष्टान्तेन सर्वज्ञानानां
बाह्यार्थाभावात् ज्ञानगत एवार्थो बाह्यतया
प्राप्यं, नैतदेवमिति बाधोदयात्। न चेद्ग्र-
तते।

ज्ञाने इदमिति शुक्तिकाविषयामिन्द्रि-
यदोषादगृह्यमाणविशेषामिति ज्ञानं, रजत-

मिति सदृशदर्शनोद्बुद्ध संस्कारजं मनोदोष-
तद्देश खंडितं स्मृतिज्ञानमिति गृह्यमाण-
योरगृह्यमाणविशेषयोर्निरन्तरं प्रतीतयोः
साकांक्षयोः रूपरूपिणोर्भेदाग्रहात्सामाना-
धिकरण्येन व्यवहार एवेदं रजतज्ञाने विद्य-
ते। बाधकज्ञाने च भेदो गृह्यत इति न व्य-
भिचार इति वाच्यम्। भेदाग्रहात् प्रवृ-
त्तेः सुषुप्तावपि प्रवृत्तिः स्यात्। न च
निरन्तरभानात् प्रवृत्तिः गवाश्वौ शुक्ति-
रजते इत्यत्रापि प्रवृत्तिप्रसंगादिति त-
त्संप्रयोगजकत्वमलक्षणमिति प्राप्ते, —

प्रथमं सर्वज्ञानानां अर्थाव्यभिचा-
रित्वं साधयितुं विषयलक्षणमाह-ये-
18 नेत्यादि। विषयत्वेन येनार्थेनावच्छिद्यते
यो बोधः स्फुरति सोऽवच्छेदकोऽर्थः। तस्य
अवच्छेद्यस्य बोधस्य विषयः। अतः इदमि-
ति रजतमिति च ग्रहणस्मरणरूपे द्वे ज्ञा-
ने तत्रेदमिति पुरोवर्तिवस्त्ववच्छिन्नत्वेन
स्मरणान्न नार्थव्यभिचारि, किन्तु इन्द्रिय-
दोषाच्छुक्तित्वाद्यग्रहण~~स्मरण~~मेव केव-
लं विद्यते। प्रतीतांशस्येदमो न व्यभिचारः।
रजतमिति शुक्लभास्वरत्वादि सदृशाव-

R. No 2901.

मलिनोद्बुद्धसंस्काराद्रजतविषयस्मृतिज्ञानं
ज्ञायमानं मनोदोषात्तदंशाविधुरं जायत इति,
तदपि न व्यभिचारीत्यवच्छेदरूपार्थस्य
न कुत्रापि व्यभिचार इत्यर्थः।

ननु यदि ज्ञानभेदः कथं तर्हीदं
रजतमिति सामानाधिकरण्येन व्यवहारः
भ्रमगतिश्चेत्यत आह- यादृशेत्यादि।
भ्रमगतिरिति सामानाधिकरण्यव्यवहा-
रसिद्ध्यर्थं रूपरूपिणोर्विशिष्टप्रतीतिनै-
यत्यं प्रदर्शयति यादृशेत्यादि। यद्वस्तु
यादृशा सहैव ज्ञेयम्। यद्यपि द्रव्यं या-
दृग्विधेन रूपेण सहैव ज्ञेयं न पृथक् सह
त्वं च विशेषणविशेष्यभावेन प्रतीतिनिय-
माविशिष्टप्रतीतौ विशेषणस्य परतन्त्र-
तया विशेष्यभावेन प्रतीति नियमा विशि-
ष्टप्रतीतौ विशेषणस्य परतन्त्रतया विशे-
ष्यस्य स्वतन्त्रतया प्रतीतिरिति द्योतयितुं
सहत्वकथनम्।

विशेषणस्य विशेष्यपरतन्त्रतया
परात्मभवघटितमूर्तित्वेन प्रतीतिनियमा-
द्विशेषणविशेष्ययोस्सहैव धीर्न पृथगि-
त्यर्थः। ननु दण्डीति विशेषणभूतदण्डस्य

पृथगपि प्रतीतिरेतन्नियमो नास्तीत्यत आह-
रूपिस्वभावादिति पृथक् प्रतीत्यनर्हरूप-
19 रूपिस्वभावप्रयुक्त एवायं नियमः।

तदनर्हद्रव्यस्वभावप्रयुक्तः रूपि-
द्रव्यं च केनचिद्रूपेण सहैव प्रतीयते। रूप-
रूपतया इति रूपिरूपिस्वभावात्व असं नियम इत्यर्थः रूपिस
मपि कस्यचित् विशिष्ट प्रतीतौ नियमात्
भ्रान्तिस्थले वियुक्त इत्याह- तदविरतधि-
या, निरन्तरभावना द्यद्रूपरूपिणोरिति
सिध्यति।

तन्त्रांशेन यत्शब्द निर्दिष्टवस्तुपरामर्शिना
यत्सहैव ज्ञेयं वस्तु तद्ध्वरः। धीश्च

द्विहेतौ अन्यस्येदं रूपमित्यगृहीतता-
दृशेन यादृग्विधेन सह ज्ञेयं तादृग्विधेन
तत्सदृशेन धीस्थेन सदृशदर्शनोद्बुद्ध-
संस्कारात्स्मृतिधीस्थेनान्येन रजताका-
रेण पूर्णां आकारविरहादपरिपूर्णां कतिय-
मिति यत्तद्भ्रमगतिशुक्तिका संप्रयुक्ते चक्षु-
षि दोषवशाद्विशेषाग्रहणे इदमिति
सामान्यमात्रेण वस्तुमात्रे स्फुरिते तद-
नंतरं सदृशदर्शनोद्बुद्धसंस्काराज्जायमा-
नं रजतस्मरणं मनोदोषात्तदंशरहितं
जायते।

ततेदमो रूपिद्रव्यस्य रूपाकांक्षायां
रजतस्य रूपिद्रव्याकांक्षायां यस्मादिह-

R. No 2901.

भेदाग्रहणादन्याकारेणाकांक्षापूर्तिः क्रियते।
तत एव भ्रान्तित्वं न त्वन्यस्यान्यथाभानात्.
नेदं रजतमिति बाधकेनापि भेदो गृह्यते
न तु किञ्चिद्बाध्यत इति न व्यभिचार
इत्यर्थः।

प्रकृतमुपसंहरति तद्बाह्यमेया विक-
ल्पा इति। यस्माच्छुक्तिकारजतस्यापि
न व्यभिचारः तस्माद्विकल्पानामज्ञाया-
पि योजिता विकल्पप्रत्यया बाह्यरूपं वस्तु
मेयं मेषां न तु बौद्धमिति विकल्पानां
बाह्यार्थत्वात्तत्संप्रयोगजत्वं संभवत्येवे-
त्यर्थः।

20. बाह्यमेयत्वे जाते स्वसत्ता सिद्धा तत्र के-
चिदपरजातिव्यतिरिक्तां सत्ताजातिमंगीकु-
र्वन्ति। सत् सदिति शब्दप्रयोगान्यथानु-
पपत्तिस्तत्र प्रमाणमिति च वदंति। तन्निर-
सनान्तरीयकतया जातिस्वरूपमपि दर्शयति।
तद्धीहानात्सत्वमिति तदेवेदमिति धीः।
तद्धी; तस्याहानमभावान्न सत्ताजातिरस्ति
यत्र भिन्नेष्वभिन्नाकारवमर्शिनी धीः
सा जातिधीः यथा स्वास्ति इति काकाद्या-
दिषु भिन्नेष्वभिन्नाकारावमर्शिनी सैवेय-

मिति धीस्तथा सर्वपमहीधरादिष्वप्येका-
काराबमर्शिनी धीः स्यात् ॥ भवेत्तर्हि
सत्ता जातिस्तदभावान्नेत्यर्थः।

ननु यद्यनुगतं रूपं न संभवेद्यते
तथापि सत्सदिति शब्दप्रयोगोपाधिकं
किमपि धर्मान्तरं कल्प्यत इति शंकां सदि-
ति प्रयोगस्यान्यथानुपपत्त्या परिहरति।
प्रमितिविषयतार्हैक धीः शब्दहेतुरिति ॥

प्रमितेर्विषयः प्रमितिविषयः तद्भा
वस्तत्ता एतद्वस्तु प्रमितिविषयतार्हमित्येकैव
या धीः सा तथा एवंभूता धीस्सदिति
शब्दप्रयोगहेतुः प्रमितिविषयत्वेत्येताव-
न्मात्रमुच्यते।

तर्ह्यस्तीति सर्वत्र वर्तमानव्यपदेश
एव नत्वासीत्। भविष्यतीत्यापि इति तद-
र्थमर्हशब्दप्रयोगः तदर्हताया भूतादावपि
विद्यमानत्वात् भूततया व्यपदेश उपपन्न
इत्यर्थः। नन्वेवमपि प्रमितिविषयार्हताया
भविष्यति वर्तादावपि विद्यमानत्वात्तत्रापि
वर्तमानव्यपदेशस्यादित्यत्राह एकधीरिति।

---

२१ इदानीं स्वप्नप्रत्ययमुखेन सर्वप्रत्ययानां

निरालंबनतापादनपुरस्सरं तत्संप्रयोगज-
त्वाक्षेपप्रकारं संक्षयति। नैषाविधा स्वप्न-
करीति।

तत्स्या जाग्रद्दशा कर्तृविवासनास्तु।
न स्वान्यवेश स्मरणादध्ष्टोत्कुरनादि
हेतोः स्मृतिरस्वमुत- इति।

अस्तु तावच्छुक्तिका रजतज्ञाने भेदा-
ग्रहेण समाधेयो व्यभिचारः स्वप्ने कथं
व्यभिचारः। न च भेदाग्रहविधात् संभवति।
बाधकज्ञानोत्तरकालं कस्यापि दव्यवस्था-
नात कस्य केन भेदाग्रह इत्यक्लृप्तेः।

न च स्मृतिः तदुद्बोधकाभावात् नचा-
दृष्टमुद्बोधकम्। तदुद्भवे प्रमाणाभावा-
दिति वासनारूपमेव स्वप्नज्ञानम्।

एवं च जाग्रद्बोधोऽपि वासनारूप एवेति
युक्तम्। कल्पनालाघवादित्येवं पूर्वपक्ष-
प्रकारं नैवेत्यर्थे नाहएवा भेदाग्रहविज्ञान-
स्वप्नकरी स्वप्नज्ञानस्य सत्यत्वसाधनीति
हेतौ स्वप्नगता विद्या वासनास्तु बाह्यार्थस्या-
त्यन्ताभावादित्यर्थः।

नन्वस्तु स्वप्नस्य वासनात्मकत्वं
तथापि जाग्रत्प्रत्ययस्य वासनात्मकत्वं

दुर्भणं बाध्यविरहादित्यत्राह जाग्रद्दशाकर्तृ-
विविधा वासनास्तु अपि समुच्चये। आस्थि-
त्येनेन स्वतो जाग्रत्प्रत्ययस्य स्वप्नप्रत्यय-
वद्वासनात्वप्रतीत्यभावेऽपि वासनात्वमा-
पद्यते।

तत्र हेतुः लाघवं तयोरुभयत्रार्थस्यैक-
रूपत्वप्राप्तिः। यदि जाग्रत्प्रत्ययानां बाह्य-
गतोऽर्थः स्वप्नप्रत्ययानां वासनात्मकः। तदु-
भयत्रार्थस्य द्विरूपत्वमाश्रयणीयं स्यात्
तत्परिहाराय उभयत्र वासनात्मकत्वमे-
22 वेति वासनामयमेवेदं ज्ञानजालं वासना
च समनन्तरप्रत्ययकारिणिकां उत्तरक्षण-
प्रत्ययजनयित्री काचित्संस्कारविशेषः
तमुक्तमनुभवात् संस्काराद्वासना ततोऽनु-
भव इति।

अतो वासनावशादेव नीलाद्याकारा-
वभासः न बाह्य इति। तत्संप्रयोजत्वं
निर्विषयमित्यर्थः। [शङ्कान्तमाह नेति। न
वासनारूपत्वं स्वप्नज्ञानानामित्यर्थः।

नन्वेवं निर्विषयत्वं तेषामिति शंकां
स्मृतित्वेन तत्समर्थनमनुचितमिति सूचि-
तम्। ननु तदंशारहिता कथं स्मृतिरित्यत्राह-

अतत्त्वेति। तदंशरहितेत्यर्थः। ननूद्बोधका-
भावान्न स्मृतिस्तत्राह अदृष्टादिति। स्वप्ने
सुखदुःखाद्यनुभूयते। तदनुभवो दृष्टमेहेतु-
रित्यास्थेयम्। तत्र देहाद्यारम्भमुखेन
तद्धेतुत्वसामर्थ्यद्वारा सुखदुःखाद्युत्पाद-
यति। तदंशरहितां स्मृतिमुत्पादयति। स्मृ-
तित्वानभिव्यक्तावितित्वाभिमानात् भ्रान्ति-
त्वव्यवहारोऽप्युपपद्यते इति स्मृतिरेवेयं
स्वप्नप्रतीतिः न वासनेत्यर्थः। नन्वदृष्टा-
स्तित्वे किं मानमित्यत्राह स्वान्यवेद्य-
स्फुरणादिति। स्ववेद्यं चान्यवेद्यं च स्वान्य-
वेद्यतया स्फुरणाल्लोके वस्तूनां प्रतीति-
र्द्विधा स्वसंबन्धित्वेन परसंबन्धित्वेन च
ममेदं विदितमन्यस्येदं विदितमिति व्यवहारा-
द्वस्तूनां तथा स्फुरणे को हेतुस्तत्राह अदृ-
ष्टादिति। स्वगतासाधारणमेव तत्र हेतुः
तदुक्तम्।

23. अदृष्टप्रेरितो गच्छेत् स्वप्नगं वा स्वप्नमेव वा।
इति। स्वप्नेऽपि स्वसंबन्धित्वेन स्फुरण-
मस्तीति स्वपरसाधारण्येन स्फुरणान्यथा-
नुपपत्तिरदृष्टास्तित्वे मानमिति स्वप्नस्य
स्मृतिरूपत्वाद्वासनारूपत्वाभावान्निरा-

लम्बनतेति तत्संप्रयोगजत्वं प्रत्यक्षलक्षणं उपपन्नमित्यर्थः।

---

स्वप्नद्वारके बाह्यार्थापलापे निरस्तेपि तत्संप्रयोजकत्वाक्षेपः। तत्र ममेदं विदितमिति ज्ञानस्य कल्पिततयाऽवभासित्वादपरमार्थिकत्वलितयावभासः संविदेव स्वयं प्रकाशमपरमार्थभूता।

स्वयं प्रकाशत्वं च साकाराया एव न निराकारायाः आकारस्य नीलादिरेक एव स च संविदि प्रविष्ट इति नीलान्यर्थो निराकारतया शून्यः संविदद्वैत आकार एव बहिष्ट्वेन प्रतीयते। न पारमार्थिकः। प्रमातृत्वार्थवत साक्षात्संविदवच्छेदकत्वाभावात प्रमेयकोट्यन्तर्भावमुखेन संविदन्तर्भाव इति। संविदद्वैते नार्थशून्यत्वं तत्संप्रयोगजत्वासंभव इयं पूर्वपक्षमाह-

अर्थे धीर्यत स्वभावप्रमितिरूपगता तत्स्वभावात्मनि स्याद्न्यग्राह्या तु न स्यात स इव नरोपाधिकं स्यात। स्वभावा अर्थाभिन्नाच रूपद्वयविधुरता भिन्नसंवित्यसामान्यादिति।

तत्स्वभावात्मनि स्यादित्यनेन संविदं
स्वयं प्रकाशत्वं प्रतिज्ञायते। नीलाद्यर्थवि-
षये येन स्वभावेन विशिष्टा। अथवा य-
त्स्वरूपा धीः संवित् प्रमितिरुपगता प्रमि-
तित्वेनोपगता अवगतेति वा पाठः।

25 धीरेकैव उपाधिभेदेन प्रमितिरूपेण प्र-
मातृरूपेण च वर्तत इत्यभिप्रायेण धियः
प्रमितिरूपत्वोक्तिः।

ततश्च नीलाद्यर्थविषये प्रमितिरू-
पा दृष्टा। आत्मनि स्वस्मिन्नपि तत्स्व-
भावा नीलाद्यर्थे च प्रकाशस्वभावा इति।
स्वविषये प्रकाशेऽपि तत्स्वभावैव स्यान्ना-
न्ययेत्यर्थः। नन्वस्तु प्रकाशस्वभावा सं-
वित्तथापि यथा नीलाद्यर्थस्य परप्रकाश्य-
तया प्रकाशः। तथा संविदोऽपि स्वात्मनि
संविदन्तरप्रकाश्यतयास्तु प्रकाश इत्यत आह
अन्यग्राह्या तु न स्यादिति। तु शब्दोऽवधा-
रणे संवित्तावत्स इवार्थ इवान्यग्राह्या न
स्यात् वैधर्म्यदृष्टान्तोऽयं यथा स नीला-
द्यर्थोऽन्यग्राह्यस्तथा संवित् संविदन्तर-
ग्राह्या न भवति। अन्यग्राह्यत्वस्य बाह्या-
र्थप्रयुक्तत्वात्। संविद्यान्तरिति बाह्यार्थ-

प्रयुक्तान्यग्राह्यत्वन्न संविद आपादनीयम्। अथवा साधर्म्यदृष्टान्तोयं अत्र चान्यग्राह्या तु न स्यादित्यत्र संविदन्तः सजातीयसंविदन्तरग्राह्या न भवति। स्वयं प्रकाशासंविदित्यर्थः।

ननु नार्थीकर्मणा सिद्धिरस्ति इति कर्मत्वं संविद आश्रयणीयम्। न स्वयंप्रकाशेत्यत्राह- न च परोपाधिक इति। चकारोऽभ्युच्चये [अर्थे] किञ्चिदित्यर्थः। यत्स्वभावस्तन परोपाधिकः पराधीनः यः स्वतो भावः तस्य पराधीनत्वे स्वभावभंगस्यात्प्रकाशस्वभावत्वं च धियो नीलाद्यर्थवदवगतमिति न संविदन्तराधीनता संविदः प्रकाशे धीकर्म सिध्यतीति तु सिद्धिशब्दार्थनिरूपणान्निरस्तमिति।

स्वयंप्रकाशा संविदित्यर्थः। एवं धियः स्वप्रकाशत्वं प्रसाध्य तत्फलतया बाह्यार्थाभावं प्रदर्शयितुमुपक्रमते। धियोऽर्थाभेदं दर्शयति।

25 अर्थाभिन्नायेति चकारो यस्मादित्यर्थे। यस्माद्धीः स्वयं प्रकाशा अतस्सा नीलाद्यर्थेन अभिन्ना न धीव्यतिरेकेण नीलाद्यर्थोस्तीत्यर्थः।

R. No 2901

संविदर्थयोः अभेदस्य कथं स्वयंप्रकाश-
प्रयुक्तत्वं तत्राह- रूपद्वयविधुरतयेति।
रूपं नाकार उक्तः आकारद्वयविरहादिदम-
हं जानामीत्यत्रैक एव नीलाद्याकारः प्रथते·
स चाकारः स्वयं प्रकाशायाः संविद एव युक्तः
निराकारायाः प्रकाशानुदयापत्तेः।

एवं प्रतीतस्य नीलाद्याकारस्य संवि-
दाकारत्वे आकारान्तरविरहे चार्थस्य नि-
राकारत्वेन बहिष्ट्वप्रलापात् संविदाकार-
निष्ठतया तदभेदः तदुक्तं साकारा स्वयं
प्रकाशा भवति। नीलधीस्संविदाकारनि-
ष्ठेति। ततश्च रूपद्वयविरहादर्थसंविदभे-
द इत्यर्थः।

एवं सहोपलंभनियमादभेदो नीलत-
द्धियोरिति युक्तम्।

भिन्नतामभिप्रेत्य प्रकारान्तरेण
यत्संविदद्वैतं ग्रन्थ उक्तं तत्संक्षिप्तम्। ~~भिन्ना-
भोरर्थयोस्संवित्तिः भिन्नसंवित्त्यसाम्या-
दिति~~ इदानीं हेत्युक्तप्रकारमपि संक्षिपति
भिन्नसंवित्त्यसाम्यादिति। भिन्नयोरर्थयोः
संवित्तिः भिन्नसंवित्तिः तया साम्यं यत्तथा
तदभावो भिन्नसंवित्त्यसाम्यं तस्माद्भिन्नयोः

हि नीलपीताद्यर्थयो भेदेन प्रतीतिर्दृश्यते।
न सहैवेति नियम इति। तयोरभेदः।

यदि भेदः तर्हि कदाचिद्भेदेनापि प्रतीयेत
तदभावादभेद एव इति नीलाद्यर्थस्य संवि-
दाकारनिष्ठतया बहिष्ठत्वाभावात्तत्संप्रयोग-
जत्वासंभवादप्रामाण्यं चोदनाया इत्यर्थः।
राद्धान्तमाह- न ग्राह्यान्यस्वभावा स्फुरति।
21 तदनुगाधीः प्रकाशैकरूप इति। अत्र धी
विमतिस्तत्रार्थनिर्देश्या सा यत्रचार्थ विमति-
स्तत्र धीर्निर्देश्यस्त इति न्यायानुसारेण
धीस्वभावनिरूपणे तावन्न हि रर्थाभावस्य
व्यापादनमित्याह- न ग्राह्यान्यस्वभावा स्फु-
रतीति ग्राह्यं त्वान्यत्र।

अन्यत्वं च तस्य संभवेक्षया धी-
स्तावन्नाग्राह्यभूतनीलाद्यन्यस्वभावा स्फु-
रति किन्तु स्वस्वभावादेव धीर्धीस्वभावा-
स्फुरति। ग्राह्यं तु ग्राह्यस्वभावं स्फुरति। तदु-
क्तम्। संवित्संविदाकारा स्फुरति।

नीलं नीलाद्याकारमिति एवमाकाराभेद-
स्याति स्फुटतया स्फुरणान्न संविदर्थयोर-
भेद इत्यतः परं मौरव्यमभेदिनः यद्दृष्टात
स्फुरणप्रकारनिरूपणमित्यर्थः।

अथवा - न नैतदेवमित्यर्थः। ग्राह्याद-
न्यः विलक्षणस्वभावः। यह्यास्सा अन्यत्पू-
र्वोक्तिवत्।

नन्वस्त्वाकारभेदः। तथापि सहोप-
लम्भादभेद इत्यत्राह - तदनुगेति तदिति-
ह्लपरामर्शः। तन्नीलाद्यर्थं बहिष्ठ्वेनावस्थितं
धीस्वावच्छेदायानुसरति। नत्वर्थो धिय-
मपेक्षाविरहात् अवच्छेदकताया अर्थस्यैव
तदुक्तम्-

अर्थेनैव विशेषोहि निराकारतया धि-
यामिति इत्यवच्छेद्यावच्छेदकभावे न प्र-
तीति नियमादेन सहोपलम्भनियमः नत्व-
भेदादित्यर्थः। एवमाकारभेदेन बाह्यार्थस-
द्भावं प्रसाध्य धियो यत्स्वयं प्रकाशत्वमुक्तं
तदङ्गीकरोति। धीः प्रकाशैकरूपेति प्रका-
शैकस्वरूपेत्यर्थः।

पुनरपि धीशब्दोपादानं पूर्वतनस्य
27 व्यवधानात् इत्यपुनरुक्तिरिति सत्संप्रयो-
जत्वेन प्रत्यक्षस्याव्यभिचाराच्चोदनाप्रामाण्यं
सङ्गतमित्यर्थः।

---

इदानीं प्रत्यक्षलक्षणे दिगुपदर्शन-

द्वारा दर्शितानुमादिलक्षणानि प्रदर्श्यन्ते।
तत्सं
~~[illegible]~~ n. क्षिपति

(श्लो) यद्रूपं येन युक्तं स्फुरति गुणतया देशकालानपेक्षं
तद्धीस्तत्तद्विहीनं कथमिव सहते कल्पिता-
पेक्षमेव।
शङ्काविष्टानुधाविण्यनुगमविगमं प्रेक्ष्य नो-
त्प्रेक्षमेवा स्यात्
तर्केणापोह्य सिध्येदनुमितिरत दालोक-
नेपि क्रियादौ n.

अनुमानं शङ्कितव्यभिचरन्नोति सं-
शय:। बाष्पादिदर्शनादग्न्यनुमाने व्यभिचार-
दर्शनाच्छङ्कितव्यभिचार इति प्रमाणसामा-
न्याच्चोदना व्यभिचारसंदेहस्तत्राह- यद्रूप-
मित्यादि। तत्राप्यनुमांगभूतव्याप्ते: स-
कृद्ग्रहणप्रकारं प्रथमपादेनाह- धूमादिस्वरूपं
येनाग्न्यादिना विशिष्टं स्फुरति नान्यथा
वैशिष्ट्यान्च विशेषणविशेष्यभावेन तत्रै-
त्यं स्फुरणम्। अग्निसंबद्धो धूम इति
नानयोस्संबन्ध इति अयमिति धूमस्वरू-
पस्यैव देशकालाद्यवच्छेद: न त्वाग्निसंब-
न्धस्य गुणस्य गुणान्तरानपेक्षत्वात्।

एवञ्च देशकालानवच्छिन्नस्य निरुपा-
धिकस्य संबन्धस्य प्रथमदर्शन एव ग्रहणात्।

सकृद्ग्रहणेनैव नियमरूपव्याप्तिरगृहीता न-
उक्तमनवाच्छिन्नसंबन्धि पदार्थस्य विशेष-
णं संबन्धो निरूपाधित्वादिति।

एवञ्च स्वतःप्रामाण्यवत्प्रथमदर्शन
२४ एव संबन्धो गृह्यते न भूयोदर्शनेनेत्यर्थः।

नन्वेवमपि व्यक्तिभेदे तद्विशेषणभूता-
ग्निसंबन्धस्यापि भेदाद्यनवच्छेदेऽपि प्रथ-
मव्यक्तावेव संबन्धग्रहणं न व्यक्त्यन्तरे-
पीति तदर्थं भूयोदर्शनापेक्षेति शंकाहानार्थं
रूपपदं रूपपदेन रूप्यतेऽनया व्यक्तिरिति।
यद्यपि व्यक्तिविशेष एव संबन्धस्तुतः प्रतीयते।
तथाविधाकृतिकव्यक्तिसंबन्धित्वेन संबन्ध-
स्फूर्तेराकृत्युपलक्ष्यत सर्वव्यक्तीनां प्रथम
एव संबन्धो गृहीतः शब्दार्थसंबन्धवद-
त्यर्थः।

अनुमानाङ्गभूतव्याप्तेः सकृद्दर्शनप्रकारं
प्रदर्श्यानुमाप्रकारमाह-

तर्कैरित्यादि संबन्धविशिष्टधूमादि-
धीरग्न्यादिहीनं धूमादिकयमिव सहते, न
सहत इत्यर्थः।

पूर्वतर्कादुपरिपतितं धूमं पश्यतो धीः
तद्विशेषणत्वेन पूर्वगृहीतमग्निसंबन्धमपि

गमयेन्नद्धीनं धूममात्रमित्यर्थः।
तत्र हेतुःकल्पितेति धूमादिस्वरूपविशे-
षणमेतत् व्यभिचारदर्शनेन यदुपाधित्वेन
कल्पितं तदपेक्षते यत् तत्तथा नेत्यकल्पि-
तापेक्षा निरुपाधिसंबन्धित्वाद्गमयेदेवोह्यः।
ननु प्रथमदर्शन एव निरुपाधिकसंबन्ध-
ग्रहणात्तदनन्तरमेवानुमा स्यादिति न भूयो-
दर्शनापेक्षेत्याशंकायामग्नेरार्द्रेंधनसंयोगो-
पाधित्वेन धूमसंबन्धदर्शनाद्धूमेप्यौपा-
धिकसंबन्धशङ्का निवृत्त्यर्थं भूयो दृष्टेर-
पेक्षितत्वादनन्तरानुमानाभावः इत्याह-
शंकेति अनुमितिरित्यन्तम्।
ननु दीर्घकालाद्युपाधिशंका भूयो
दर्शनेनापि न शाम्यति। भूयस्तद्दर्शनमि-
त्यत आह। दृष्टानुसारिणीति। यदि स्यादि-
२१ त्यगत्याऽवच्छिन्न स्ववसन्तादिकालस्य
कुसुमाद्युत्पत्तिं प्रतिहेतुता दृष्टा तद्विधस्यैव
शंकार्हता। न परार्धपर्यन्तस्येति भूयोदर्शना-
पेक्षेत्यर्थः।

केन पुनस्तच्छंकेत्यत आह- अनुगतवि-
गमं प्रेक्ष्य वोत्प्रेक्ष्य वेति। अनुगतयोः व्याप्त-
योरेकतरस्य विगमं प्रेक्ष्य संबन्ध्यन्तरे शंका-

स्यात् । यथाग्ने र्लिंगमं प्रेक्ष्य संबध्यन्तरे
धूमो तच्छङ्कां उत्प्रेक्ष्य वा यथा व्याप्तिविशेष-
शंका अनेकव्याप्तिशंका अन्योपाधित्व शंका-
(ज्ञा) र्चयैवं भूता शंका तत्तर्केण — सिध्येदनु-
मिति संबन्धः तर्को निष्प्रसंगः । यथा यद्य-
यमाग्निमान्न स्याद्धूमवानापि न स्यात् मह
ह्रदवदिति ।

व्याघातवधिराशंका तर्कशंकावधिर्मतः" .
इति । एवं उपाधिशंका सापेक्षत्वादनं
तरानुमानानुत्पत्ति र्नत्वनन्तरं व्याप्तिग्रहणा-
भावादित्यर्थः ।

प्रत्यक्षयोग्यमर्थविषयमनुमानं प्रसाध्या-
दृष्टस्वलक्षणविषयं आधायित्वान्तदालो-
कनेपीति अनुमीयते तदनवलोकनेनाप्य-
नुमिति र्भवेदित्यर्थः ।

ननु कुतैतदित्यतत्राह- क्रियादावि-
ति । आदिशब्देन शक्तेः परिग्रहः । अत्र
सामान्येन कार्यमागन्तुकमिति ज्ञाने सति
निरन्तरोत्पन्न संयोगविभागरूपकार्यदर्शना-
गन्तुकहेतुत्वानुमाने दृष्टरूपस्य देवतादेः
समवायिकारणस्यागन्तुकत्वासंभवात्
परिशिष्टमन्य समवायिकारणं क्रियाश-

विदितं अदृष्टस्वलक्षणमागन्तुकं कल्पयते
इति। संयोगविभागादृष्टस्वलक्षणागन्तु-
३० कहेतुरनुमा तथाऽन्यादेः कारकदर्शना-
दकारकावस्थातः कारकावस्थायामति-
शयलक्षणः शक्तिपदार्थोऽनुमीयत इत्यनु-
माऽव्यभिचाराच्चोदना प्रमाणमित्यर्थः।

---

शास्त्रलक्षणं संक्षिपति। संज्ञया विनि-
र्णीतवचनव्यक्ति संस्कृतात्। वाक्यान्माना-
न्तराज्ञातविज्ञानं शास्त्रमुच्यते। शास्त्रशं-
कितव्यभिचारि न वा इति संशयः। एष व-
न्ध्यासुतो याति खपुष्पधृतशेखरः। इत्या-
दौ व्यभिचारदर्शनाच्छंकितव्यभिचारीति
प्राप्ते उच्यते सम्यगित्यादि।

शासनाद्धि शास्त्रमुच्यते शासनं च हि-
तविषये प्रेरणं तदात्मकत्वं च हितविषयानु-
ष्ठानापादनहेतुधियः एवेति प्रेरणात्मिका
धीरेव शास्त्रं नयतः शब्दादेः तस्य शास्त्र-
त्वं प्रेरणात्मकत्वाभावात्। लोकेनैवं रूपं
भेदमविविच्यतः प्रेरणाधीस्तस्य शास्त्रत्वा-
भि.. .नाऽव्यभिचारशंकालक्षणव्यावर्त्या-
लौकिकवाक्यादृष्टशब्दानुमानप्रमितविषयत्वेन

न प्रेरणाधी रीतिमुल्लङ्घ्य वैदिकविषयमेव-लक्ष्यते।

वाक्यादिशास्त्रान्तं ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिविधिरूपाद्वाक्यादधिकारिणो मानान्तरानधिगतेऽपूर्वकार्येऽर्थे ममेदं कार्यमिति यद्विज्ञानं तच्छास्त्रम्। यद्यपि कार्यधियो न शास्त्रत्वं, प्रेरणात्मकत्वाभावात्। प्रेरणाधिय एव तद्रूपत्वं न तु प्रेरणाधिय-शब्दबोध्यता तात्पर्यबहिष्ठत्वात्। कार्यस्यैव तात्पर्यविषयत्वमिति कार्यधीपर्यन्ता प्रेरणाधीर्न पृथग्भूतेत्येवं रूपं कार्यज्ञानं शास्त्र-मित्यर्थः।

३। नन्वेवमपि वेदार्थनिर्णीतिविज्ञानेऽतिव्याप्तिरित्यत आह- सम्यगित्यादि विशब्दव्याख्यानमेतत्। समीचीनं पूर्वपक्षयुक्तिभिरविचाल्यं सिद्धान्तरूपो न्यायः। तेन विशेषणरूपदेशेन निर्णीताया वचनव्यक्तेः वचनविन्यासप्रकारः तया यत्संस्कारः तत्संहितात्। अधिकारिबोद्धृपुरुषज्ञानादिबलात् पूर्वपक्षयुक्तिभिरयथाभूताया वचनव्यक्तेः सिद्धान्तयुक्तिभिः तदज्ञानेनादिनिवर्तनेन यथावास्थितत्वेन प्रतिपादनं संस्कारः तत्सहकृतादिति

विशेषणे सति न वेदोऽर्थभ्रान्तिज्ञाने व्यभि-
चार इत्यर्थः।

---

असन्निकृष्टशास्त्रानन्तरं बुद्धिस्थं
तद्रूपं उपमानमुच्यते तत्संक्षिपति सादृश्य-
मेकगतमन्यानिरूप्यमेकं साक्षाद्विशिष्टा-
दविभेदमिति स्ववेश्मन्। तद्धीसादृश्यव-
यद्दृष्टिभवात्यपूर्वं गोवर्तित भ्रमयतीत्युप-
मानसिद्धिरिति।

उपमानमपि सव्यभिचारि नेति
संशयः। तत्र पलालकूटदर्शने गजादिसा-
दृश्यज्ञानं व्यभिचारीति प्राप्ते प्रथममुपमा-
नस्य प्रमाणान्तरत्वं साधयितुं तत्प्रमेय-
भूतं सादृश्यं द्रव्यगुणादिव्यतिरिक्तं पदा-
र्थान्तरमित्याशयेनाह- सादृश्यमिति। स-
दृशमिति बुद्धिबोध्यं यद्वस्तु तत्सादृश्यं
द्रव्यादिमातिरिक्तं तदेकगतमेकस्मिन्वस्तुनि
गतमाश्रितमित्यर्थः।

द्रव्यं च नाश्रितं तदाश्रितत्वान्न द्र-
३२- व्यं सादृश्यमित्यर्थः।

नन्वेवं गुणकर्मान्तर्भावोऽस्त्वित्यत्राह-
अन्यानिरूप्यमिति। सादृश्यं त्वेकव्यक्तिगतमपि-

R. No. 2901

व्यक्त्यन्तरगतसादृश्यनिरूप्यत्वेन प्रतीयते। गुणादिव्यक्त्यन्तरगतगुणादिनिरूपणनिरपेक्षमेव प्रतीयत इति। न तयोरन्तर्भाव इत्यर्थः।

इयं योजना एकगतं सादृश्यमेकमिति। एकं भिन्नमित्यर्थः। हेतुरन्यनिरूप्यमिति अन्येन व्यक्त्यन्तरगतेन सादृश्येन निरूप्यं न ह्यभिन्नयोर्निरूप्यनिरूपकभावो दृष्टः किन्तु भिन्नयोरेवेत्यर्थः।

नन्वेवमपि भूयोऽवयवसामान्यमस्तु सादृश्यमित्यत्राह - साक्षादित्यादि:। अपिः समुच्चये न केवलमन्यनिरूपकत्वमेव साक्षाद्विशेषकत्वमपीत्यर्थः। भिद्यते इति भेदो व्यक्तिः। व्यक्तिं साक्षात्सादृश्यं विशिनष्टि। भूयोऽवयवसामान्यंत्ववयवद्वारेति। व्यक्त्यवच्छेदेन भेदादनयोर्भेद इत्यर्थः॥

एतच्चानरेण बोध्यमित्यत्राह इतीतिति एतत्प्रकारं स्ववेद्यं स्वेनैव वेद्यमित्यर्थः।

33. एव परपक्षस्तं निरस्तं भेदस्याति स्फुटत्वेनाभेदस्यानुचितत्वात्। एवञ्च समवायेऽन्तर्भावः। असंबन्धरूपत्वान्नापि विशेषे तस्याभावादिति इत्यादि व्यतिरिक्तं पदा-

र्थान्तरं सादृश्यमितिसिद्धं। पदार्थान्तरत्वं प्रसाध्य तद्विषयं ज्ञानं प्रमाणान्तरमित्याह-तद्धीरित्यादि। सकृद्गवयदृष्टिभवापि तद्धी-र्गोनिर्व्यपूर्वं तद्गमयतीत्यन्वयः। तच्छब्दया-श्यां सादृश्यपरामर्शः अपि शब्द एवार्थे।

नान्विन्द्रियव्यापारानन्तरजं सादृश्यधीः प्रत्यक्षेत्यताह-गवयदृष्टिभयापीति। गोव-र्तित्तद्गमयतीति यद्विषयस्संप्रयोगस्तद्वि-षयं ज्ञानं प्रत्यक्षम्।

नत्वन्यसंप्रयोगेऽन्यविषयमिति न प्रत्यक्षमित्यर्थः।

ननु एवं तर्हि स्मृतिरित्यताह पूर्व-मिति। स्मृतेरनुभूतविषयतया नापूर्वत्वं एतत्पूर्वाननुभूततया नापूर्वमिति न स्मृ-तिरपीत्यर्थः।

ननु सादृश्यदर्शनजनिता यादृश्या-न्तरे धीरनुमानादित्याशंकान्निवर्त-यितुं सकृद्ग्रहणे न भूयो दर्शनसामग्रीवि-रहः दृष्टिभावेन वर्तमाननिर्देशेन ज्ञातसंब-न्धसामग्रीविरहश्लोकः। विजयतोऽपि भेदः अनुमाने संबन्धग्रहणसमयगृहीता निगृह्यते। इह तु गोगतगवयसादृश्यस्य गवयदर्शन-

सम्य एवानुभवं सादृश्यधीस्सादृश्यं
गमयति गम्यगमकयोर्भेदनिसजातीययो-
रेवात गम्यगमकता। न तु धूमाग्न्योरिव
भिन्नयोरिति विजयभेदोपि दर्शित इत्य-
लमति क्षोदेन। एवमुपमानस्यानुमानात
सामग्रीतो विषयतश्च भेदात् भेद एवेत्यर्थः।

परोक्तमुपमानं निराकरोतीति इत्यु-
पमानसिद्धिरिति गोसदृशो गवय इति
वाक्यात गोसादृश्यं गवयस्य प्रतीयता-
३५ वदवयवसामान्यबाहुल्यज्ञानं गवये जायते
तन्नोपमानमिति दर्शितं एवमुपमानमपि न व्य-
भिचारीति चोदनाप्रमाणमित्यर्थः ॥.

---

अवशिष्टार्थापत्तिलक्षणं संक्षिपति।

अदृष्टव्यापका भावभ्रान्त्या सन्देहितं बहि-
र्दृष्टेनैव संपत्तीत्यर्थापत्तिः प्रमाणान्तरमिति।
अर्थापत्तिः शंकितव्यभिचारा नेति संज्ञाये
लक्षणेन वक्तुं शक्या नेति संक्षेपः। अनुमा-
नादस्या न भेदः तथा हि जीवको देवदत्तस्य
गृहाभावदर्शनेन बहिर्भावकल्पनमनुमान-
मेव। जीवक एकत्राभावोऽन्यत्र भावस्य
समुद्रवृद्धिचन्द्रोदयवदेव कालयोगिनौ का-

त्वस्यैकभूतौ च तयैकताभावे सति विद्यमा-
नत्वं देशान्तरसंयोगेन नियतैकार्थसमवाय
लक्षणसंबन्धः एकदेशभूतं च देवदत्तस्ये-
त्यनुमानविवादाध्यासितो देवदत्तो बहिर्देश-
योगी गृहाभावे सति विद्यमानत्वात् यो
गृहाभावे सति विद्यमानः स त कतान्य-
त्रौम्नाति । यथाहमित्यनुमानादर्थापत्ति-
रभिन्ना इति प्राप्ते व्याप्तिसापेक्षत्वेऽपि
प्रतीतिप्रकारभेदात् भेदः अनुमाने कल्प्या-
कल्पनया संदिग्धाद्धूमाद संदिग्धोऽग्नि-
र्गम्यते । इह तु कल्प्याकल्पनया यत्सं-
दिग्धं जीवनं देव गम्यत इति भेदो न
योरित्याह- अदृष्टेति । गृहे अदृष्टा व्या-
पकाभावभ्रान्त्या सन्देहितमेव बहिष्टुन
संपत्तीति योजना । यस्य यज्जीवनं गणि-
तागमादिनानिश्चितं गृहाधारतया च यत्
गृहीतमरास्त्यादिना तत्रैव निवासात्
एवं भूतं तं पुरुषं कदाचित् गृहे जीवनं
प्रतिव्यापकरूपस्य गृहसंबन्धस्याभावो
जात इति भ्रम बुध्या सन्देहविषयभूतं गणि-
तागमादिना तत्सत्तावगमः गृहाभावदर्श-
नेन च तदसत्ता चेति बहिर्देशसंबन्धकल्प-

R.N. 2901.

नयानुपपद्यमानमेव जीवनं गणितागमबलात ग्रहसंबन्धस्योपाधिकत्वकल्पनाबहिर्देशवर्तितया संवेद्यते न तु कल्पया कल्पनया संदिग्धासंदिग्धामित्यर्थः। उपसंहरति इतीति।

प्रमाणपञ्चकस्येत्थं सम्यगीरितम्। इदानीं लक्षणग्रन्थः प्रत्यक्षादेस्समर्थ्यते। तद्विस्तरं संक्षिपति। संसृष्टधीर्विसदृशो, ननु धर्मिबोधो नाभावगम्य इति स्थितिरभ्युपेतः। तद्धीस्यस्तथैवमिति भावदर्शनेन काचिद्धयेति सैव निजतुल्यगतेरभाव इति।

उक्तमानपञ्चकस्यार्थविच्छेदलक्षणे कार्ये ऽन्ययोगव्यवच्छेदे अभावाख्यप्रमाणसापेक्षमाहोस्वित् उत नेति संशयनिवृत्त्यर्थमभावाख्यमानान्तरमाहोस्वित् उत नेति विचार्यते।

तत्र प्रसिद्धे लक्ष्यस्यान्मेयाभावान्नवेत्ययं संदेहात्मा पूर्वपक्षो भाष्यादपि न शाम्यति। तत्र कश्चित् प्रसिद्धेर्हि लक्ष्यं स्यादिति मन्यते। मेयसिद्धिस्त्विह घटो नास्तीति व्यवहारतः।

ननु तुल्यव्यवहारस्य तन्मात्रादुत्पन्नता अतिप्रसङ्गादित्येवं प्राप्ते राद्धान्त उच्यते । संसृष्टेत्यादि: । अर्थसंशये धीनिर्देशयस्स इति धीस्वरूपविवेकं करोति प्रथमपादेन । ननु रवधारणे ।

अथवा विपर्यस्तबुद्धित्वेनापरमार्थविपिनं पूर्वपक्षिणं प्रति परार्थबोधने ऽनुनयरूप: प्रश्न: घटादिना सँसृष्टस्य
३८ संबन्धस्य या धीस्संसृष्टधीर्विशिष्टधी: तद्विसदृशो विलक्षणो धर्मिणो भूतलादे: बोध एवेह घटो नास्तीत्याद्यभावव्यवहारेषु विद्यते । नत्वदभिमताभावबोध: द्विधा हि भूतलादिधर्मिबोध: घटादिसंसृष्टतया तदसंसृष्टतया च तत्र या संसृष्टधीतोऽन्या विधा केवलधर्मिबोधस्सोऽभावव्यवहारहेतु: नाभावाख्यवस्त्वन्तरावबोध इति ।

बोधस्वरूपनिरूपणे तन्मात्रस्यैव प्रतीति: न तदधिकाभावस्येति मेयाभावादभावाख्यं प्रमाणान्तरमपि नास्तीत्यर्थ: ।

ननु संसृष्टधीविसदृशधर्मिबोधस्य किं धर्मिमात्रं विषय: उत तदतिरिक्तं

धर्मिमात्रं चेत् संसृष्टेऽप्यभावव्यवहारः
स्यात्। तत्रापि तन्मात्रस्य विद्यमानत्वात्।
तदतिरिक्तपक्षेऽस्मदिष्टसिद्धिः। धर्मिमा-
त्रातिरिक्तस्य वस्त्वन्तरत्वात्।

नचैतदिन्द्रियव्यापारानन्तरजनि-
तमैन्द्रियकमिति वाच्यम्। इन्द्रियस्य
भावग्रहणोपक्षीणत्वात्। किञ्च प्राङ्नासी-
दयमिहेतीन्द्रियव्यापारानपेक्षमभावेनैव
प्रतीयते इति। अभावाख्य प्रमाणेनाभावग्र-
हणमित्यत्राह- ननु भावगोचरतयेति।
अभावव्यवहारे तद्बुद्धीनामपि संसृष्टवि-
लक्षणो धर्मिबोध इत्यास्थेयम्। घटव-
त्यपि तद्व्यवहारप्रसंगात्। तत्र तद्बोध-
स्याभावविषयत्वेनावास्थितिरस्माभिर्ना-
भ्युपेता। संसृष्टदृष्टियोग्य धर्मिव्यति-
रिक्तवस्त्वन्तरस्यानवबोधनात् विसदृ-
शत्वं तु धर्मिणं पूर्वदृष्टस्य बुद्धिस्थतया
31 न्याकारत्वमात्रात् स्यान्न तत्संसर्गाभावयो-
गितया। तदुक्तं भूतलदृष्टेरेव हि घटसंस-
र्गधीविषयत्वमात्रेणापि तत्संसृष्टकदृष्टि-
विलक्षणत्वं प्रसिद्धमेव तन्न तत्संसर्गाभाव-
विषयतयेति। एवमभावव्यवहारेषु विसदृशा-

धर्मिबोधादधिकाभावनबोधस्ततस्तत्प्रबो-
धस्याभावगोचरतयास्थिनस्युपेतेत्यर्थः।

नन्वेवं धर्मिबोध एवाभाव इत्युक्तं
स्यात्। ततस्तद्बुद्धिनाशेऽभावनाशात् मृ-
ताद्युत्थानं स्यादित्यत आह- तद्धीस्थैवेति।
तद्धीस्संसृष्टा धर्मिधीः तटस्थां स्थितिशी-
ल्वता तद्धीस्थता सैवाभावः। धर्मिणस्संसृष्ट-
दृष्टिविलक्षणधर्मिधीस्थता सैवाभावः न
धीमात्रमिति न तन्नाशप्रयुक्तदोष इत्यर्थः।

नन्वेवं तद्धीस्थव्यपदेशाभावांगी-
कृता तन्मात्रव्यतिरिक्तधर्मान्तरांगीकरणा-
त्तत्राह- मिति भावदशेति। मिति भावे काचित्
भावदशैव व्यक्ता। अभावप्रमितिकाले ता-
वत्कपालोत्पत्यादिरूपा काचित् भाव-
दशैव स्फुरिता नत्वभावदशेति नाभावांगी-
कार इत्यर्थः।

ननु निरवयविनाशिनां सुखादीनां
भावेन भावान्तरोदय इति। तत्र वस्त्वन्त-
रापत्तिस्तत्राह इति सैवेति। इति हेतौ
यस्मादभावाख्य भावस्त्वप्रतीतस्ततस्सैव
भावदशैवाभावः न वस्त्वन्तरमित्यर्थः।
हेतुनिजतुल्यगतेरिति निजशब्देन

संसृष्टधीविसदृशबोध उक्तः। ततश्च यत्र
यत्र संसृष्टधीविसदृशधर्मिबोधः तत्र तत्र
38 सान्वयविनाशिषु निरन्वयविनाशिष्वपि
केवलोत्पत्तिलक्षणभावदशाया अनुगत-
त्वात्तस्यैवाभाव निरन्वयविनाशिष्वपि
केवलात्मस्थितिलक्षणाभावदशेति। सर्वत्रा-
भाव इति। मेयाभावेनाभावप्रमाणस्य भा-
वान्न तद्रूपेणमुक्तमानपञ्चकस्यान्ययोग-
व्यवच्छेदकत्वं स्वत इति चोदनाप्रमाण-
मित्यर्थः।

---

सत्प्रत्यक्षमित्यन्तरलक्षणपरत्वेन
व्याख्यायानिमित्तादिना संबन्धनित्यता-
क्षिप्तौ तत्संक्षिपति।

(श्लो) इष्टहेतुतया लोके इष्टकार्यपरत्वतः।
इष्टमन्यानपेक्षत्वं स्पष्टबाधं च किंचन॥

औत्पत्तिसूत्रोक्तानपेक्षत्वं संभवति नवेति
संशयः। न संभवति लोके इष्टहेतुतया कार्ये
लिङादिना व्युत्पत्तिं न निरुपाधिकतया
स्वतन्त्रकार्ये इष्टहेतुता च विनियोगार्थी-
नापि नियोगश्चास्येदं साधनमिति। तत्र
मानान्तराधीनः साध्यसाधनत्वावगमार्थी-

नत्वात् तस्य इति वेदेपि कार्यबोधस्य फलसाधनतया विनियोगे मानान्तरापेक्षत्वादनपेक्षता क्षिपति।

किञ्च इष्टपश्वादिकार्यपरत्वात् पशूनामनन्तरदर्शनियोग्यत्वे सत्यप्यदर्शनांतरसापेक्षत्वादप्यनपेक्षता क्षताक्षीति तदाह इष्टेत्यादि। लोके शब्दानां इष्टहेतुतया कार्यबोधकत्वदर्शनात् दृष्टपश्वादिकार्यपरत्वाच्च वेदे मानान्तरसापेक्षत्वादन्यापेक्षत्वं इष्टमिति मानान्तरापेक्षत्वादप्रामाण्यं चोदनाया इत्यर्थः।

३१ विधिमुखोक्तं विधेः प्रदर्श्य अर्थवादमुखोत्थमपि दर्शयति स्पष्टबाधमिति किञ्च न वाक्यमिति शेषः। स्पष्टो बाधो मानान्तरविरोधो यत्र एव यजमानः स्वर्गं यातीति एव इति। शरीरं न यातीति प्रत्यक्षविरुद्ध एवमाक्षिप्ते राद्धान्तमुपक्रमते।

औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः तस्य ज्ञानमित्यनेन तत्सांक्षिपति।

(श्लो)

स्यादेव यद्यवगमो नरसाध्ययोगात्
स्वाभाविकीत्युपगता खलु शब्दशक्तिः।

R. No. 2901.

नन्वस्य सा न घटते व्यभिचारदृष्टौ
योगान्तरानवगमे समयोपपत्तेः ॥

नरसाध्ययोगात् नरत्वसंबंधात्
यत्नकृतकसंबन्धात् शब्दात् सापेक्षत्वं
स्यादेव कथं तर्हि अनवगमस्तत्राह- स्वा-
भाविकीति। खलुरवधारणे-

वृद्धव्यवहारप्रसिद्धिद्योतको वा शब्द-
स्यार्थाभिधाने या शक्तिः सा स्वतः न
विनियोगाधीनेत्यर्थः। एवमुपक्रान्ते पूर्व-
पक्षी चोदयति नन्विति। अस्य मुखे दृश्य-
मानस्य शब्दस्य देशान्तरवर्तिनार्थेन
समुपपद्यत इत्यत्राह- व्यभिचारदृष्टावि-
ति। प्रथमश्रवणेऽर्थाप्रतिपत्तेः व्यभि-
चारो दृश्यत इत्यर्थः। गम्यगमकता तु
संबन्धान्तरपूर्विका धूमादेरिवेति व्यभि-
चारदर्शने सति न स्वाभाविकसंबन्धाव-
सर इत्यर्थः।

ननु, संश्लेषादिसंबन्धा-
न्तरेणास्तु तन्निर्वाहस्तत्राह योगान्तरा-
६० नवगम इति। अन्तरशब्दस्समयापेक्षया
प्रयुक्तः योगस्संबन्धः। तत्र न संश्लेषः
क्षुरमोदकशब्दोच्चारणे मुखस्य पाटन-

पूरणप्रसङ्गात्। केनाप्यननुमत इति।
स्वतो नास्त्येव संबन्ध इत्यर्थः।

ननु समयोऽपि न संभवति तत्कर-
णस्याशक्यत्वात् तत्राह- समयोपपत्तेरिति
चैत्रादौ समयदर्शनात् गवादिष्वपि
समयादेवार्थधीरिति कल्पयितुं युक्तमिति।
नात्यन्तापरिदृष्टसंबन्धान्तरकल्पना।
एवञ्च समयस्यैवोपपन्नत्वात् स्वाभा-
विकत्वं न युक्तमिति। पौरुषेया वेदा इ-
त्यनपेक्षत्वप्रतिज्ञा निर्विषयेत्यर्थः।

---

एवं पूर्वपक्षिणा राद्धान्तिनि पराजिते
वैयाकरणः स्वपक्षावलम्बनाय चोदयति
अथ कः शब्द इति। तत्संक्षिपति।

(श्लो)

वर्णाधिकं ननु वचस्समयानपेक्षं
वर्णेषु धीः क्रमवतीति न वाच्यसिद्धिः।
नैवान्त्यधीर्न च विवर्तकियाप्युपाधे-
रेकाश्रयतेऽति युगपत्स्मृतिरप्रतीपा॥

इति। वर्णा एव शब्दाः तदधिको वेति सं-
शयः। क्रमोत्पन्नत्वेन युगपदेकक्षणास्थित्व-
नर्हेभ्यो वर्णेभ्योऽर्थप्रतीतिलक्षणकार्यस्य

संभवात्तदुत्पत्त्यर्थं वर्णाधिको वर्णैरद्रव्य-
स्य स्फोटाख्यः शब्दः तस्यार्थात्मना
विवर्तनस्वभावत्वादर्थेन सह संबन्धो
नित्यस्समत्पक्षमवलम्ब्य स्वेतिशब्दस्तो-
दयति। वर्णाधिकमिति।

५। ननु वर्णाधिकं यदस्मदभिमतं
वचनं तत्समयानपेक्षमिति स्व परिगृही-
तां वर्णात्मकतां त्यक्त्वा समयनिरपेक्षत्वेन
नित्यसंबन्धानुगुणं स्फोटलक्षणमंगीकुरु।
नोचेन्न पूर्वपक्षयुक्तसमयमोक्ष इत्यर्थः।

ननु प्रत्यक्षाभूतेषु वर्णेषु सत्सु तद-
तिरिक्तात्मता इष्टवचनकल्पनमनुचितमि-
त्याशंक्य वर्णस्योऽर्थप्रतीति लक्षणकार्या-
संभवात् तदन्यथानुपपत्त्या वर्णातिरिक्त-
शब्दकल्पनेत्याह- वर्णेष्विति। गकारादि-
वर्णानां क्रमेणोच्चारणात् तदनुरोधेन तेषु
धीरपि क्रमवती ततश्च क्रमप्रतिपन्नानां
तेषां क्रमिकाणां युगपदेकक्षण समुदितत्वेन
अवस्थानाभावान्न समुदितस्य स्तेभ्यो
वाच्यस्यार्थस्य सिद्धिप्रतिपत्तिः वाच्यप-
देन वर्णानां वाचकत्वासंभव उक्तः। वाच्य-
सिद्धि हि वाचकत्वाधीनाति तन्निषेधेन

वाचकत्वासंभवोऽपि सूचितः। एतेन नैकै-
कस्माद्वर्णात् तत्सिद्धिः अप्रतीतेः।

न च पूर्ववर्णजनितसंस्कारसहिता-
दन्त्यवर्णात् पूर्वोच्चारणवैयर्थ्यप्रसंगात्।

नापि स्मृतिस्थवर्णेभ्यः स्मृतेर-
प्यनुभवानुसारेण क्रमेणात्मलाभाद्वर्णेभ्यो
विशेषाभाव इत्यादि युक्तयोऽपि संगृहीताः
वर्णेषु धीरित्यविशेषेणोक्तेः इत्यर्थप्रतीति-
लक्षणकार्यस्य वर्णेभ्यो संभवात्तदतिरिक्त-
शब्द इत्यर्थः। सिद्धान्तमाह- नैवान्यधी-
रिति। अस्य वर्णातिरिक्तस्य स्फोटस्य
धीः प्रतीतिः नास्ति गौरित्येवमादिषु गका-
रौकारविसर्जनीया एव प्रतीयन्ते न तद-
४२ तिरिक्तः कश्चिदिति वर्णातिरिक्तशब्दसत्ता
ऽभ्युपगमः अप्रतीतेरित्यर्थः।

एवं चाप्रतीयमानस्य स्फोटस्यार्था-
त्मना परिणामोपगमो निर्बीज इत्याह-
नचेति। चोऽवधारणे, एवं च सतीत्यर्थः।
अपि समुच्चये। यदि वर्णातिरिक्तः शब्दः
प्रतीयते तर्हि तस्यार्थात्मना विवर्तनमाशङ्क्य
तदभावाद्विवर्तकथाप्रसंगोऽपि नास्ति। यद्व-
शात्संबन्धनित्यत्वसमर्थनमत्यन्तमनुचि-

R. No 2901 .

मित्यर्थः।

ननु एवं शब्द इति प्रयोगात् श-
ब्दानां एकदा प्रतीयते अतश्च तेषां वर्णातिरि-
क्तत्वं एवोपपद्यते। बहुत्वाद्वर्णानां तथा नि-
र्देशासंभवात् तत्राह- उपाधेरिति। एक इद-
मित्याख्या एकाख्या तद्भाव एकाख्यता
सा श्रोत्रग्राह्यतोपाधिनिबन्धना नैकत्वनि-
बन्धनेत्यर्थः।

ननूक्ता वर्णेभ्यः अर्थप्रतीत्यनुप-
पत्तिरित्याशंक्य तत्प्रकारकमुपपादयति।
इतीति। यस्माद्विवर्तासंभवः। अन्ताद्यु-
गपत्संभूय स्मृतिरप्रतीपा अविरुद्धा-
क्रमवदनेकधीस्थतया ऽनुभूतेषु वर्णेषु
क्रमाविशिष्टानेकविषययुगपत्स्मृतिकल्प-
नायां विवर्तपक्षः प्रतिपक्षस्तस्य च निरस्त-
इति युगपत्स्मृतिरप्रतिहतातिस्य वर्णेभ्यो-
ऽर्थप्रतीतिसंभवान्न तदतिरिक्तशब्द
इत्यर्थः।

---

पुनरपि शब्द एव पृच्छति अथ
गौरित्यत्र कोऽर्थ इति तत्संक्षिपति।

43. (श्लो)

पङ्क्त्यादिशब्दजनिता पुनरेकबुद्धि-
र्नापादयेत्सकलमेव वचो निवर्तम्।
साधुत्वमत्र मनुसृत्य तदुक्तिमात्रं
स्यादप्युपाधिविषये समुदायबाधात्॥

इति।

पङ्क्तिर्यूथं वनमित्युदाहरणं पूर्वोक्तं शब्दस्य वर्णात्मकत्वं संभवति नवेति संशयः। वनमिति बहुषु तरुषु श्रूयमाणमेकवचनमात्मिन्नेकवचनमिति हि तं बहुषु तरुषु असंभवात् वर्णातिरिक्तां शब्दस्योपकल्प्य तद्विषयामेव बुद्धिमुत्पादयतीति वनादिषु शब्दाध्यासितरूपोऽर्थ इति सर्वत्राप्येकरूपत्वलाभाय वचो निवर्तमित्यापादयेदिति वर्णातिरिक्तशब्द इति पूर्वपक्षप्रकारमर्थेन निषेधद्वारा दर्शयति। पङ्क्त्यादीति आदिशब्देन यूथवनग्रहः पुनरशब्दो विशेषे एकमिदमिति बुद्धिरेकबुद्धिः एकत्वबुद्धिर्वा शुक्तिकारजतादिषु बाह्यार्थत्वे साधिते प्रत्यक्षानुमानाधीनव्युत्पत्तिकपङ्क्त्यादिशब्दजनिता एकत्वधीस्तरूणां बहुत्वात्तत्रासंभवन्ती शब्दालंबनतां स्वस्य परिकल्पयन्ती

शब्दस्य वर्णातिरिक्ततामपि कल्पयन्ती लाघवात्सर्वत्रापि शब्दाध्यासकल्पनया सकलमेव प्रपञ्चं वचो विवर्तमिति नापादयेत्। प्रत्यक्षविरुद्धार्थकल्पनाया असामर्थ्यादित्यर्थः।

ननु प्रयोगान्यथा वनादिषु शब्दावलंबनता निश्चीयते। तद्वदन्यत्रापीति शंकायामन्यथोपपत्त्या समर्थयति।

५५ साधुत्वमात्रमिति। साधुशब्देन प्रयोगसाधुत्वमुक्तम्। नार्थसाधुत्वं तदसंभवस्य प्रस्तुतत्वात् ततश्चार्थसाधुत्वं विना विप्रयोगसाधुत्वमात्रेण तदुक्तिमात्रं स्यात्। पंक्त्या श्रुतिमात्रं स्यादित्यर्थः।

नन्वेवं सर्वत्र प्रयोगसाधुत्वेन स्यान्नार्थसाधुतेति प्रकारान्तरेण बहिरर्थापलाप इत्यत्राह- तदुक्तिमात्रमिति पंक्त्याश्रुतिरेव प्रयोगसाधुतया न तु यत्रार्थसाधुत्वोपपत्तिस्तत्रापि अर्थसाधुत्वोपपत्तावन्यथार्थकल्पनाऽनवकाशादित्यर्थः।

नन्वेवं वनादौ समुदायावलम्बया वृक्षाणामेकत्वात् अर्थसाधुतया प्रयोगोपपत्तेः। प्रयोगमात्रशरणत्वाश्रयणमनुचित-

 R. No 2901.

मित्यर्थः। तत्राह- अप्युपाधिविषय इति।
उपाध्युपहितो यो विषयः यद्वा, विषयश-
ब्दयोगयतोच्यते।

उपाधियोग्येनादावपि साधुत्वमा-
त्रानुसारेणैव प्रयोगः। दारा इत्यादौ
प्रयोगसाधुतैव गतिरिति सैव वनादौ उ-
पेयेत्यर्थः।

ननु वनादावुपाधिरेव नास्ति
वृक्षव्यतिरिक्तस्य कस्यचिदप्रतीतेरित्य-
त्राह- समुदायबोधादिति। निरन्तराव-
स्थितेषु बहुषु तरुषु समुदायबोध~~दीति~~।
~~विरलसमवस्थितेषु~~ एतावदस्ति। ततश्च
तद्बुद्धिबोध्यत्वेन समुदायावस्था प्रती-
यते। ततश्च समुदायप्रयोगसाधुतैवो-
पेयेति। वनादिप्रयोगमुखेन वर्णातिरिक्त-
शब्दसमर्थनमा~~त्र~~शामात्रमित्यर्थः।

---

४५ यदि वर्णातिरिक्तः शब्दो नास्ति।
तर्हि कस्तव तेषामर्थेन संबन्धोऽभिमत
इति। शब्द एव पृच्छति अस्य संबन्धः
क इति ~~तस्मिं~~ तत्सन्निपाति

(श्लो).

नन्वेवं दुस्तरस्ते समय इति भवेदकृतद्विड्विकर्ता ·
मैवं व्युत्पत्तिमालाद्यवगतिरिति तत्प्रागपोह्यानुमेयम्।
हेतुव्याप्तं तु कार्यं न विषमविधया तद्विशेषेण कर्ता ·
भूम्येवाचेतनन्तु स्वतनुवशमतज्ज्ञानभाङ् न प्रयोज्यम्

अत्रापि वर्णातिरिक्त शब्दः उत नेति संशयः। वर्णातिरिक्त शब्दानंगीकारे पृथगनुभूतयोः शब्दार्थयोस्संबन्धस्यायुतसिद्धत्वाभावेन नित्यत्वसंभवात् सामयिक एव तयोस्संबन्ध इति ते समयो दुस्तरः मम तु तादात्म्याङ्गीकारात् नित्यत्वोपपत्तिर्न स इत्यर्थः। ततः किमत्राह- भवेदिति।

गवादिषु संबन्धानुज्ञाने सति देशकालव्यवहितानामर्थानां शब्दैस्सह संबन्धं कर्तुं अस्मदादीनामसामर्थ्यात् अस्मदाद्यतिरिक्तः क्षित्यादिद्रव्यकरणशालिशाली· विश्वस्य कर्ता आस्थेयः। स एव सृष्टेजगदनुगृहाय शब्दार्थयोः संबन्धं कृत्वा वेदं च कृतवानिति वेदस्य पौरुषेयत्वादुक्तानपेक्षत्वक्षतिरिति सकलमनवस्थितमित्यर्थः। राद्धान्तमाह मैवमिति।

इह इदानीन्तनानां गामानयेत्याद्युत्तमवृद्धप्रयोगानन्तरं मध्यमप्रवृत्तिं दृष्ट्वा

R. No 2901.

तात्पर्यावगमपूर्वकमावापोद्धाराभ्यां स्वा-
र्थे शक्तिमवधार्य व्युत्पन्नानां समयनिरपे-
क्षमेव प्रयोगान्तरेष्वर्थप्रतीति दृश्यते
इति न कश्चिद्विरोध इत्यर्थः।

ननु जगदारंभकाणुद्व्यसंयोग-
56. करं यददृष्टं तच्चेतनाधिष्ठितम्। कार्यकरम-
चेतनत्वाद्वास्यादिवत्। अधिष्ठेयस्वरूपज्ञाति-
श्चाधिष्ठातेति पक्षधर्मताबलादीश्वरसि-
द्धिः।

न च स्रोतस्त्रेन सिद्धसाधनता तस्या-
दृष्टस्वरूपसाक्षात्करणासामर्थ्यादिति।
जगदीश्वरनिर्मितमिति वेदा अपि
तन्निर्मिता इति प्राप्ते उच्यते। हेतुव्याप्तं
त्विति तुरेवार्थे। अचेतनं चेतनाधिष्ठित-
मिति सामान्यव्याप्तिमूलकाधिष्ठातृनुमा-
ने अचेतनस्य कार्यकरत्वलक्षणं यत्कार्यं
तच्चेतनाधिष्ठानरूपहेतुमात्रव्याप्तमेव न
विजयमविधया लोकभूवैपरीत्येन तद्वि-
शेषेण ईश्वररूपकर्त्रा व्याप्तं सामान्यव्याप्तेः
विशेषणवृत्त्यसंभवादित्यर्थः। कुतव्याप्ति-
रित्यताह- भूम्नेवेति सामान्ये बहुषु कर्तृषु
एव व्याप्तिर्न विशेषेण कर्तेरित्यर्थः।

नन्वेवं क्षेत्रज्ञातिरिक्तेश्वराभावे अदृ-
ष्टस्य प्रवृत्त्यभावः स्वरूपज्ञप्तिज्ञरूपाधि-
ष्ठातुरभावात् क्षेत्रज्ञस्य च तच्छक्त्यभावा-
दित्याशंक्याचेतनं तु देहाद्यनधिष्ठेय-
मेवेत्यादृष्टमपि तत्स्वरूपं ज्ञप्त्यनभि-
ज्ञक्षेत्रज्ञोऽधिष्ठेयमित्याह- चेतनान्विति।
तुर्विशेषे दृष्टमदृष्टं वा यदचेतनं तन्न
स्वरूपज्ञप्तिज्ञाधिष्ठानाधीनं किन्तु स्व-
तनुवशं स्वशरीराधीनमत ज्ञानप्रयोज्यं त-
ज्ज्ञानमिति तच्छब्देनाचेतनपरिग्रहः। तज्ज्ञा-
नं तस्याचेतनस्य ज्ञानं भजत इति तन्न
भवतीत्यतज्ज्ञानभाक् स एव। ज्ञः क्षेत्रज्ञः
तेन प्रयोज्यं प्रेर्यमित्यस्वतनुवशमिति क्रि-
याविशेषणम्। अचेतनं तावच्छरीराधी-
नमेव न न स्वाधीनं सर्पादिभिरपि वल्मी-
काधिष्ठानदर्शनादिति प्रयत्नसहितदेहा-
धीनमेवाचेतनमिति क्षेत्रज्ञेनातज्ज्ञेनापि प्र-
57. योज्यं यद्यधिष्ठेयस्वरूपज्ञत्वमपि प्रयो-
जकं स्यात् तज्ज्ञानस्यापि देहव्याप्तत्वदर्श-
नादीश्वरे देहप्राप्ते नैश्वरत्वसिद्धिरिति
तज्ज्ञानभागज्ञप्रयोज्यमेवाचेतनमित्यर्थः।
एतत्सर्वमतो दृष्टविपरीतताहानार्थं चेतना-

धिष्ठानताहानमेव देहहानदुपकरन्ननर-
हानं वल्मीके ऽन्याधिष्ठानदर्शनादित्यादि-
ग्रन्थे प्रदर्शितमिति चोदनाप्रमाणमित्यर्थः।

---

इदानीं प्रस्तुतचिन्तापरिहारार्थं उप-
क्रमते। अथ यदुक्तमिति तत्संक्षिपति।

(श्लो)

इष्टहेतुतया लोके वक्तृधीर्य्यपर्धेर्मिति।
शब्दमात्रात्तु शब्दार्थे इष्टदोषयुगं कृतम्॥

इति। कृत इति इष्टहेतुत्वात् इष्टविरुद्ध-
त्वात् मानान्तरविरोधाच्च त्रिधाक्षेपः। लोके
इष्टहेतुतया वक्तृज्ञानमवधानेन वाक्यात्
कार्यविबोधः। वेदे शब्दमात्राद्वक्तृज्ञानाद्यु-
पाधिरहितात्केवलाच्छब्दाच्छन्त्य शक्ति-
प्रतियोगिककार्यरूप एवार्थे प्रमितिरिति.
वेदे स्वर्गकामादिनियोज्यान्वयविरोधव-
शात् अपूर्वं कार्य एव मितिरिति लोकदृष्ट-
मानान्तरविरोधतत्सापेक्षा स्वरूपस्य
कृतोऽवकाश इत्यर्थः।

---

इदानीं मानान्तरविरोधोदाहरणमाह
यत्त्विति तत्संक्षिपति।

देहाद्यन्योऽवभाति ह्यहमिति विषये दृष्टता-
तैकरूपो
देहाकारो नेहस्फुरति न च भवे-
द्दृष्ट्युद्धयं विरोधात्।

48 भान्त्यन्यग्राह्यधीषु व्यवहृतिघटना
न ह्यभातस्य युक्ता
तद्वन्नैवान्ययोगाद्धरमिति रनित्येति सैकाद्वि-
पाङ्गौ ॥

इष यजमानोंऽजसा स्वर्गं लोकं यातीत्युदा-
हरणम्। देहेन्द्रियादिव्यतिरिक्त आत्मा स्यात्
तदा तदभिप्रायेणेष यातीत्युपपन्नार्थं स्यात्
तद्भोवेदहविषयाभिप्रायेण प्रत्यक्षं देहस्य
दह्यमानत्वात् प्रत्यक्षविरोधादनुपपन्नं स्या-
दिति। तदर्थं देहादिव्यतिरिक्तो नेति विचारः।

ननु भेदेन प्रतिभासाभावात्
न देहादन्य इत्यत्राह- देहादन्य इति। देही-
ति विशेष्यमध्याहार्यम्। देहीति देहादन्यः
आदिशब्देनेन्द्रियादिव्यावृत्तिः कथमित्यत्रा-
हावभाति हीति। हि स्सर्वजनस्य स्वसंवेद-
नप्रसिद्धिद्योतकः। आत्मनो देहादन्यत्वं
प्रतीयत एवान परेण बोध्यमित्यर्थः। कथं
प्रतीतिरित्यत्राह- अहमिति। इदं प्रत्ययामित्रि-
ताहं प्रत्ययो ह्यात्मना प्रतीयत इति। तान्मीडीत-

देहादिव्यतिरिक्तत्वमात्मनोऽहं जानामीत्येव-मादिषु प्रसिद्धमिति देहादिभ्यो भिन्न आ-त्मेत्यर्थः।

नन्वहं गच्छामीति देहविषये ऽपि प्र-योगान्न ततो देहातिरिक्तात्मसिद्धिरित्यता-ह विषयदृष्टतामैकरूप इति। आत्मशब्दः स्वभावपरः न प्रसिद्धात्मपरः। तत इदमहं जानामीति शब्दादिविषयात् प्रतिहृष्टस्वभा-वो ह्यात्मा स्फुरति न तु घटादिवद्विषयस्व-भावेन संविक्रमतया रूपात्मन्येवाहं प्र-त्ययो मुख्यः देहादौ तूपचारनयेति देहा-तिरिक्तात्मसिद्धिरित्यर्थः।

५१ नन्वस्त्वहं प्रत्ययस्य देहव्यतिरिक्त-विषयत्वं तथापि विज्ञानस्कन्धादीनामपि द्रष्टृत्वोपपत्तेः न तदतिरिक्तात्मसिद्धिरि-त्यताहाहंकाररूप इति। सर्वहिं प्रत्ययेष्वेक-रूपानुगताकारः प्रतीयते ततश्च प्रत्यभिज्ञया स्थिरत्वोपगमान्न क्षणिकभूतविज्ञानस्क-न्धादिष्वन्तर्भव इति। ततो भिन्न इत्यर्थः। एवं प्रतीतिक्रमेणात्मनो देहव्यतिरिक्ततां प्रसाध्य विपक्षे बाधकप्रदर्शनेनापि तत्सा-धयति देह इत्यादि। इदमहं जानामीति

विषयान् प्रति द्रष्टृत्वेन प्रतीतौ देहकरचरणाआकारो न स्फुरति। ततस्तदतिरिक्त आत्मा यदि देह एवाकारतया प्रतीयेत तर्हि तदाकारोऽपि प्रतीयेत तदभावात्तद्व्यतिरिक्त आत्मेत्यर्थः।

नन्वेवमपि कर्मवत् कर्मणा तुल्यक्रिय इति सूत्रानुसारेणैकस्यैव देहस्य इदं प्रत्ययमिश्रिताहं प्रत्यये दृश्यत्वं तदमिश्रिततत्प्रत्यये द्रष्टृत्वं च कल्प्यताम्। अत्यन्तादृष्टात्मधर्मिकल्पनातो धर्मकल्पनायाः लाघवात्। एवं च दृश्यतया प्रतीतौ दृश्यत्वं द्रष्टृत्वेन प्रतीतौ द्रष्टृतेति देह एवात्मेत्यत आह न च भवेदिति। चस्समुच्चये न केवलं देहाकारास्फुरणात् देहस्यात्मत्वासंभवः किन्तु हेत्वन्तरादपीत्यर्थः।

यद्द्रष्टृ तद्दृश्यं न भवेत्। द्रष्टृत्वं हि दर्शनक्रियाकर्तृत्वं दृश्यत्वं हि तत्क्रियाकर्मत्वम्। स्वसमवेतक्रियाफलशालित्वं कर्तृत्वं परसमवेतक्रियाफलशालित्वं कर्मत्वमिति विरुद्धस्वभावत्वान्न कर्मकर्तृत्वसंभव इत्यर्थः।

50. लोके त्वेकस्य कर्मकर्तृव्यपदेशो विवक्षातः

R. No 2901.

न तावता वस्तुसिद्धिः। स्मृतिश्च विभ्रमामूलत्वात् उपपन्ना।

नन्वेवमात्मनो दृश्यत्वमाश्रयणीयम्। धीकर्मणो भाननियमात्तस्य देहादन्यत्वासिद्धिरित्यत आह- भातीति। आत्मा भाति न धीकर्मतया किन्तु अन्यग्राह्यधीषु नत्वात्मविषयायां धियि नीलपीतादिग्रहं रूपायद्धिः आत्मा कर्तृतया भाति न कर्मतया। धीकर्मत्वन्त्वात्म स्वात्म व्यतिरिक्तपीतादिष्वेव नियतं बाह्यप्रयुक्तास्सु धीस्तावत् स्वयंप्रकाशेति साधितम्। तत्रात्मापि तत्कर्तृत्वेन प्रतीयत इति न धीकर्मत्वनियम इत्यर्थः। न लोकदृष्टविरुद्धप्रकारकल्पने प्रमाणाभावादित्यत्राह- व्यवहृतीति व्यवहारोऽभिवदनादिस्त त्ध्दटनासंबन्धो यस्मादभातस्य न युक्ता ततस्तद्दर्शनानुपपत्त्या संवित्कर्तृतया भानं कल्प्यते यदि संवित्कर्तृतयात्मा न प्रतीयेत तर्हि स्वसंबन्धितया वित्तेरभानात् विदितमितीदं मया अन्येन वेत्यादि जिज्ञासा प्रसज्येत। तदभावात्सर्वज्ञानेषु आत्यात्मेति कल्प्यत इत्यर्थः।

नन्वेवमपि व्यवहारान्यथानु-

पपत्यापि भानमात्रमेव कल्प्यं न संविन्निवृत्तया भानम्। व्यक्त्यन्तरवेद्यतयापि भानस्योपपत्तेरित्यत्राह- तद्भिन्नेनान्ययोरिति।

एव शब्दोऽप्यर्थे। यथा अभातस्य व्यवहृतिघटना न युक्ता तथाऽन्ययोगादपि न युक्ता। अन्येन व्यक्त्यन्तरेण योगो अन्ययोगः ततोऽपि नेत्यर्थः। तुरपरमितरनित्येति। अतइदमहमित्यादिव्यवहारेणात्मनो नियतभानमाश्रयणीयं अन्यथा स्वसंबन्धिव्यवहारानुपपत्तेः।

५। तत्र यदि व्यक्त्यन्तरवेद्यतया तद्भानमङ्गीक्रियते तदा नियतभानस्यात्। व्यक्त्यन्तरस्याप्यनित्यत्वान्नियतभानाभावप्रसंगादित्यर्थः।

उपसंहरति- इतीति। एवं सति एका सा व्यवहृतिघटना द्विपाशा पाशशब्दस्यात्र गौणः पाशशब्द आकर्षणसादृश्यात्प्रयुक्तः। तत्र यदि तद्भानमंगीक्रियते तदा नियतभाऽऽन वाक्याद्व्यक्त्यन्तरस्याप्यभाव्याद्व्यवहृतिघटनाद्व्यवहर्तारि नियतभानं साधयति। तत एव व्यक्त्यन्तरा-

वैधत्वमपि साधयति। इत्युभयविधधर्मा-
कर्षणसामर्थ्यात् विपाशेत्युक्तमपि व्यवह-
ति घटनान्यथानुपपत्त्यान्यग्राह्यधीत्वा-
त्मनः संवित्कर्मतया ज्ञानाद्देहादिव्यतिरिक्त-
त्वादेव यज्ञायुधीति व्यपदेशस्य गुण-
वृत्त्या तद्विषयत्वसंभवान्न मानान्तरविरो-
ध इति चोदनाप्रमाणमित्यर्थः।

---

शब्दानित्यत्वमाशंक्य कर्मैके तत्र
दर्शनादित्यादिभिस्त्वत्र सूत्रे तन्नित्यत्वं
प्रसाध्यते। तत्संक्षिपति।

(श्लो)

शब्दे तत्त्वेन दृष्टे प्रतिनियततया
व्यक्तिधीरेकदृश्ये-
नैकव्यक्त्यप्रसिद्धे भ्रम इति
नहि धीर्नैकशाक्यानुमानात्।
ज्वालाभेदे तु लिङ्गं स्फुटविदित-
मनौपाधिकत्वे ह तद्व-
न्नैतज्ज्ञायमाने स्वरनरदिगु-
पाधिप्रभेदे विगस्य ५.

इति। गकारादिशब्दो नित्य उताऽनित्य
इत्यत्रोच्चारणप्रयत्नजन्यः शब्द उत

तद्भिन्नव्यंग्य इति विचार्यते। प्रयत्नेनाभि-
५२ व्यञ्जकस्तत्स्वभाववैलक्षण्यात् इन्द्रिय-
संस्कारद्वारेणाभिव्यञ्जकत्वमिति वैलक्ष-
ण्यादनभिव्यंजकत्वानुमा ततः परिशेष्या-
देकत्वानुमा। न च स एवायं गकार इति
प्रत्यभिज्ञया पूर्वास्थित्यागमेऽभिव्यञ्जक-
त्वानुमानप्रत्यभिज्ञाप्रत्यक्षपूर्विकानुमान-
पूर्विकानुमा बाधिकेति वाच्यम्।

ज्वालाप्रत्यभिज्ञावत् प्रत्यभिज्ञाया भेदाग्रहेणाप्युपपत्तेरिति। शब्दानित्यतया संबन्धानित्यतेति पूर्वपक्षे प्राप्ते उच्यते। शब्द इत्यादि एतद्द्वय इत्यनेन प्रयत्नस्याभिव्यञ्जकत्वं साधयति। अभिधायको वर्णात्मकः शब्दः न समुद्रघोषादिभिः तत्वेन तदेवेदमिति स प्रत्यभिज्ञा प्रत्यक्षेणावगते एवं चाभिव्यञ्जकत्वमपि नियतविषयं कल्प्यमित्याह - प्रतिनियततयेति।

यथा कार्यं हि कारणकल्पना कार्यं च प्रतीतिरसा चैकस्मिन्नेव शब्द इति प्रयत्नस्य प्रतिनियततया प्रतिशब्दं नियतत्वेन व्याप्तिः कल्प्या न सामान्यविषयत्वेन

R. No 2901.

तदुक्तम्। प्रत्यभिज्ञया बलात् नियतविष-
यमेवाभिव्यंजकत्वं कल्प्यमित्यर्थः।

ननु लोकप्रसिद्ध स्वभावकल्प-
नातो वरं प्रत्यभिज्ञायाः भ्रान्तित्वकल्पने-
त्यत आह नेति। भ्रम इत्यन्तेन लोके प्रतिनि-
यतैकाभिव्यक्त्यप्रसिद्धे रभिव्यञ्जकत्वस्व-
भाववैलक्षण्यात् प्रत्यभिज्ञाभ्रमरूपैवे-
त्यपि न संभवति। यस्मात्कृतकत्वनिश्च-
ये अनभिव्यक्तिनिश्चयस्तन्निश्चये प्रत्य-
53 भिज्ञाभ्रमनिश्चयस्तन्निश्चये कृतकत्व-
निश्चय इति चक्रकापत्तिस्ततो हेतोरित्यर्थः।

ननु प्रतिनियतशब्दप्रतीते रभि-
व्यञ्जकत्वमनुमाय जनकत्वानुमा ततस्त-
द्बाधितं नित्यत्वानुमानं किंच प्रत्यभिज्ञातः
शब्दनित्यं तन्नित्यत्वे प्रत्यभिज्ञा स्थिर-
त्वमित्यन्योन्यापत्तिश्चेत्यत आह नहीति।
चस्त्वर्थे विशेषद्योतकः ईदृशादनुमा-
नान्नहि न धीः किन्त्वतिशयेन भवेदेवे-
त्यन्वयः। ईदृशशब्देन प्रत्यभिज्ञप्रत्यक्ष-
परामर्शः ततश्च पूर्वपद्यस्थानुमानपूर्वका-
नुमानात् प्रत्यक्षपूर्वकत्वेन यद्बलीयस्त्वा-
भिव्यंजकानुमानात् बाधकविषयत्वेन

प्रत्यभिज्ञया कृतकत्वे शब्दे० वैजात्यमानस्य साधयेत्
नित्यत्वानुमानं कृतकत्वबाधकं तत्।

न हि धीर्भवतीति न संभवति। किंत्वतिश-
ये स्यादिह शब्देनोक्तं ईदृशात्प्रत्यक्ष-
पूर्वकादनुमापूर्वकानुमानतः प्रबलादभि-
व्यञ्जकानुमानभवेदेव। हि रतन्न्यायवित्
प्रसिद्धिद्योतकः। तदुक्तम्- "प्रत्यक्षपूर्वि-
कानुमापूर्विका या बलीयसी"। इति।
प्रयत्नोऽभिव्यंजकः नोत्पादक इत्यर्थः।
ननु- सादृश्यात्प्रत्यभिज्ञाभेदाग्रहादिभू-
पपन्ना। यथा ज्वालादिष्वित्यत आह- ज्वाला
भेद इति, तु विशेषतामाह- ज्वालेति। से-
वेयं ज्वालेति प्रत्यभिज्ञैकत्वेऽवगतेऽपि त-
द्भेदः पूर्वपरक्षणवर्तिन्या ज्वालात उत्तरक्ष-
णवर्तिन्या भेदेऽनुमानं ये यल्लिङ्गमवय-
विशरणात्मकं तत्स्फुटविदितं प्रत्यक्षेण
स्पष्टम् दृष्टम्। स्फुटविदितत्वाच्चानौपा-
धिकमौपाधिकन्न भवति इत्यनौपाधिकं
निरुपाधिकमेव इह शब्दस्य भेदानुमाने
54 यल्लिङ्गं न तद्वत् स्फुटविदितम्। किन्त्वस्फु-
टविदितम्। औपाधिकमित्यर्थः। ज्वालायां
तावत् प्रसरणशीलायामवयवविशरणं दृश्यते।
ततश्चावयवविशरणदर्शनादवयवि विना-
शोऽनुमीयते। ततश्च पूर्वक्षणा उत्तरक्षणे।

दृश्यमानाज्ज्वालान्यत्वमपि अनुमीयते। सैवे-
यं ज्वालेति प्रत्यभिज्ञया पूर्वास्थितत्वगमे-
च भेदः तत्रैकस्या एव ज्वालाया भेदाभेदा-
त्मकत्वं विरुद्धमित्येकस्यानुमानस्यौपा-
धिकत्वं कल्प्यम्। तत्र भेदानुमानमनौपा-
धिकप्रत्यक्षायासिद्धत्वात् प्रभावितातिर्हि
विशीर्णावयवत्वरूपाध्येयानुमाने लिंगं
प्रत्यक्षम्। पुनरपि ज्वालायाः प्रत्यक्षत्वात्
भेदानुमानेति प्रत्यक्षद्वयसिद्धलिङ्गभेदा-
नुमानं नौपाधिकं किन्तु सप्रत्यभिज्ञापू-
र्विकाभेदानुमानमेव सोपाधिकमिति साद्दश्यात्।
भेदाग्रहोपाधेरभेदप्रतीतिभेदस्तत्त्वास्तव-
इति कल्प्यते। इदन्त्वनुमापूर्वकानुमानात्
भेदावगमो न स्फुटविदित इति। यथैकस्य-
मुखस्य खड्गमुकुरतैलाद्युपाधिभेदात्
भेदस्तथाभिव्यंजकध्वनिभेदादौपाधि-
क एव शब्दस्य भेद इत्यर्थः।

नन्वनानादेशस्थ नानानरै-
रुदात्तादिस्वरभेदैर्नोच्चारितेषु गकारेष्व-
हवो गकारा युगपदनुभूयन्ते। इति
कथमेकत्वसिद्धिरित्यत्राह- नैतदित्यादि।
यद्यप्यत्र स्वरादीनां भेदोऽस्ति तथापि

गस्य गकारस्य भेद इत्यर्थः। हेतुनैतदि-
त्यादि यद्यनेकगकारा इति। भानं स्यात्तर्हि
तेषां भेदो भवेत्। न च तथा भानं किन्तु
असावपि गकारः असावपीति सर्वत्र
गकार इति प्रतीतिरेव जायते। ननु तज्ञत-
भेदावगम इत्युपाधीनामेव भेदः न गस्ये-
ति शब्दस्य प्रत्यभिज्ञया स्थिरत्वावगमात्।
सः कारणत्वेन नित्यः शब्द इत्यर्थः।

---

अस्तु तावच्छब्दस्य नित्यता अ-
स्तु तावच्छब्दार्थयोः संबन्धोऽपि नित्य-
स्तथापि न वेदार्थयोः प्रत्ययस्य न बोध-
कतेत्याक्षिपति। उत्पत्तौ चेति तत्संक्षिपति।

(श्लो) -

व्युत्पत्त्यायत्तबोधादभिनववचसो नार्थधी-
र्वैदतोऽपि *
स्याद्वाभिप्रायलिङ्गादनधिगतमितेः
वेदवाक्यान्नु नेति।
आकांक्षादिप्रभावात् प्रतिनियतविशेषा-
न्वितस्वार्थशक्ति-
र्व्युत्पत्तेर्नार्थशक्तौ प्रमितिजनकता
कल्पनायैव गुर्वी ५.

इति। वैदिकवाक्यादर्थप्रतीतिः स्यादुतने-
ति संशयः। लोके गामानयेत्यादिप्रयोगे
प्रयोज्यवृद्धस्य प्रत्यक्षयोग्यार्थविषये प्रवृ-
त्तिं दृष्ट्वा शब्दस्य तत्र शक्तिमवधार्य बा-
लोऽव्युत्पाद्यते वेदे प्रत्यक्षायोग्यानर्थे बालो
न व्युत्पद्यते इति। व्युत्पत्त्यसंभवात् वेद-
वाक्यादर्थप्रतीतिरपि न स्याद्यदि भवेत्
तर्हि मानान्तरसिद्धार्थबोधकत्वेनाप्रा-
माण्यं स्यादित्यर्थः। शब्दनित्यत्वसाधन-
पूर्वकं संबन्धनित्यत्वसाधनमिति पूर्व-
पक्षः तदेतदाह- व्युत्पत्तीत्यादि। कृतकत-
याभिनवभूतं यल्लौकिकं वाक्यं तद-
भिनववचसा पौरुषेयाद्वाक्यात् व्युत्प-
त्त्यर्थिनोऽर्थबोध इति। यस्मात्ततो वेदतो-
ऽर्थधीरपि न भवेत्। मानान्तराविषये
ऽर्थे व्युत्पत्त्यसंभवादित्यर्थः।

नन्वावापोद्धाराभ्यां पदानां
56 पदार्थेषु शक्तिः पदार्थानां च वाक्यार्थे व्यु-
त्पन्ना तत्र लोकवेदयोः पदपदार्थानन्य-
त्वाल्लौकिकव्युत्पत्तिं वेदावगाहिनीति वेदाद-
प्यर्थधीः स्यादित्यत्राह- स्याद्वेति। वेति
पक्षान्तरे यदि वेदार्थो भवेत्। तर्हि पदा-

र्थस्यैवानन्यत्वाद्विशिष्टरूपे वाक्यार्थे लोके-
वक्त्रभिप्रायं प्रति लिंगभूताद्वाक्यादेवार्थ-
धीस्स्यात्। तत्र चाभिप्रायावगमे मानान्त-
रान्तर्भावात् तत्प्रमितार्थ ~~धीस्स्यात्~~ बो-
धकतया मानान्तरानवगतस्यार्थस्य
प्रमितिर्वेदरूपान्मानान्न स्यादित्यर्थः।

इति रूपसंहारे इत्युभयथा प्रामा-
ण्यं वेदस्येत्यर्थः। राद्धान्तमाहाकांक्षा-
दीति।

स्यादेवं यदि पदार्थमात्रविषयैव व्यु-
त्पत्तिः सा त्वाकांक्षा सन्निधियोग्यार्थरूपो-
पाधिप्रभावात् स्वोपरक्तपदानां गुणप्र-
धानप्रभावेनान्विताऽवस्थापादनमुखेन
विशिष्टबुद्धिबोध्यत्वापादनरूपाद्धेतोः
प्रतिनियताकांक्षितत्वेन अन्वयप्रतियोगि-
तया नियतो यो विशेषः प्राप्तस्तेन प्रति-
नियतविशेषणान्विते यः स्वार्थः तस्मिन्
या शक्तिः सा तथा। तत आकांक्षाद्युपस्थि-
स्थापित पदार्थविशेषान्वितस्वार्थपरत्व-
मेव पदानां लोके व्युत्पन्नः न केवलस्वा-
र्थपरत्वं तदुक्तम्-
(श्लो)

R. No 2901.

यद्वदाकांक्षितं योग्यं सन्निधानं प्रपद्यते।
तेनान्वितः पदेनार्थः स्वक्रिया प्रतिपद्यते"।
इति। एवमाकांक्षादिमत्प्रतियोगिविशेषा-
न्वितविशेषाभिधानसंभवादर्थधीस्या-
दित्यर्थः।

(57) ननु पदानां स्वार्थ एव शक्तिः न त्वन्विते
गौरवात् पदार्थान्वयेतरविषयतया च
~~कल्पित~~ कल्प्यत्वात्। अभिहितान्वये
पदानां पदार्थविषयैकैव शक्तिरित्याह-
नार्थशक्तावित्याह - दिनन्तु उत्तरेणा-
न्वयः। अतैव गुर्वी न भवति किन्तु
सर्वत्रापि अर्थशक्तौ अर्थश्वासौ शक्ति-
श्च शक्तिप्रतियोगिकेऽर्थ इत्यर्थः।
व्युत्पत्तिसमये शक्तिप्रतियोगितया
गृहीतेऽन्वितरूपेऽर्थे पदानां शक्तिरूप-
त्वात् तान्विताभिधानतापाद एव न गुर्वी
किन्त्वभिहितान्वयवादेऽपि शक्तिप्रति-
योगिकार्थबोधकत्वं सर्वैराश्रयणीयम्।
तत्र यद्यन्वयरूपधर्माधिक्यं दोषत्वेना-
रोप्यते ह्यभिहितान्वये गौरवमास्ति एका
पदानां अर्थविषया परा पदार्थानां अन्व-
यविषया अपरा पदार्थानां पदार्थशक्त्या-

स्वार्थे सकल पदानां व्युत्पन्ने येऽपि पदार्था अन्वितान् आकांक्षादिमत्प्रतियोग्यन्वित

धानशक्तिरिति कल्पनागौरवात् । यस्मा-
त्पदपदार्थान्वयत्वेन वेदेपि व्युत्पत्तिसं-
भवात् तत्रापि वाक्यार्थप्रतीतिसंभवात्
प्रामाण्यं स्थितिरित्यर्थः ।

---

कारकादिसमाख्याकृतिनिमित्ता
प्रवचननिमित्तेति संशय्य प्रवचनस्य
साधारणत्वेनासंभवरूपं पूर्वपक्षं
निरस्यते - (श्लो.) —

कारकादिसमाख्या स्यात्
पाठतोऽपि प्रकृष्टतः ।
योगादेर्विधिनैकत्वं
विरुद्धा नित्यवाचिषु ॥

इति समाख्या प्रकर्षरूपात् पाठा-
दप्यसाधारण्येन व्यपदेशसंभवात् भवे-
दित्यपौरुषेया वेदा इत्यर्थः ।

ननु मानान्तरविरुद्धानि ह्यर्थप्र-
तिपादकानि वनस्पतयस्सत्रमासत बब-
रः प्रावाहणिरकामयतेत्यादिव्याख्यायाः
कृतिनिमित्तत्वापादकानीति कृतिनि-
मित्तत्वेनैव समर्थनं युक्तमित्याह-
58 योगादेरिति । विरुद्धानित्यवाचिषु